ततान्तरं सान्तरवारिशीकरैः
शिवं नभोवर्त्म सरोजवायुभिः ॥ २९ ॥

सितच्छदानामपदिश्य धावतां
रुतैरमीषां ग्रथिताः पतत्रिणाम्।
प्रकुर्वते वारिदरोधनिर्गताः
परस्परालापमिवामला दिशः ॥ ३० ॥

॥ कलापकम् ॥

विहारभूमेरभिघोषमुत्सुकाः
शरीरजेभ्यश्च्युतयूथपङ्क्तयः।

हितातपम्। न दृष्टिबाधः नापि आतपबाधः इति भावः। सान्तरवारिशीकरैः विरलाम्बुकणैः ततान्तरं व्याप्तमध्यं सरोजवायुभिः शिवं रम्यं नभोवर्त्म च अपदिश्य इति। स्वभावोक्ति अलङ्कारः ॥ २९ ॥

सितेति। अपदिश्य धावताम् इति पूर्वश्लोकद्वयोक्तं पयःप्रभृतिकम् उद्दिश्य धावताम् अमीषां सितच्छदानां पतत्रिणां हंसानाम्। "हंसास्तु श्वेतगरुतः चक्राङ्गा मानसौकसः" इत्यमरः। रुतैः शब्दैः ग्रथिताः दृब्धाः। "ग्रथितं गुम्फितं दृब्धम्" इत्यमरः। वारिदरोधनिर्गताः मेघोपरोधनिर्मुक्ताः अत एव अमलाः प्रसन्नाः दिशः परस्परालापं प्रकुर्वते इव दिष्ट्या मेघोपरोधनिर्मुक्ताः चिरात् उच्छ्वसिताः इति हंसकूजितव्याजेन परस्परम् आलपन्ति इति उत्प्रेक्षा ॥ ३० ॥

विहारेति। विहारभूमेः अपरस्रात्रगोचरात् इत्यर्थः। आगच्छन्त्यः इति शेषः। अभिघोषम् उत्सुकाः व्रजं प्रति उत्कण्ठिताः

असक्तमूधांसि पयः क्षरन्त्यमू:
उपायनानीव नयन्ति धेनवः ॥ ३१ ॥
जगत्प्रसूतिर्जगदेकपावनी
व्रजोपकण्ठं तनयैरुपेयुषी।
द्युतिं समग्रां समितिर्गवामसौ
उपैति मन्त्रैरिव संहिताहुतिः ॥ ३२ ॥

प्रसप्रमुग्णा इति भावः। "घोष आभीरपल्ली स्यात्" इत्यमरः। च्युता त्रुटिता यूथानां कुलानां पङ्क्तिः श्रेणीबन्धः यासां ताः तथोक्ताः। "सजातीयैः कुलं यूथम्" इत्यमरः। अमूः धेनवः असक्तम् अप्रतिबन्धं पयः क्षीरं क्षरन्ति स्रवन्ति। वत्सस्मरणात् प्रस्रवन्ति इत्यर्थः। क्षरतेः शतृप्रत्ययः। ऊधांसि शरीरजेभ्यः अपत्येभ्यः उपायनानि इव अतितोषकारीणि इव इति उत्प्रेक्षा। नयन्ति प्रापयन्ति। यथा लोके कुतश्चित् प्रवासात् एत्य मातरः किञ्चित् खाद्यम् आनयन्ति तद्वत् इति भावः॥ ३१ ॥

जगदिति। जगत्प्रसूतिः जगत्कारणम् आज्यादिहविर्द्वारेण इति भावः। जगताम् एकपावनी मुख्यशोधनी व्रजोपकण्ठं गोष्ठान्तिकम्। "दूरान्तिकार्थेभ्यो द्वितीया च" इति द्वितीया। "उपकण्ठान्तिकाभ्यर्णाभ्यग्राः" इत्यमरः। तनयैः वत्सैः उपेयुषी सङ्गता। "उपेयिवाननाश्वाननूचानश्च" इति क्वसुप्रत्ययान्तः निपातः। "उगितश्च" इति ङीप्। असौ गवां समितिः संहतिः। मन्त्रैः ऋग्यजुषादिभिः। "मन्त्रो ऋगादिग्रन्थोक्तः" इति वैजयन्ती। संहिता योजिता आहुतिः इव समग्रां द्युतिम् उपैति। आहुतिः अपि जगत्प्रसूतिः जगदेकपावनी च। "अग्नौ

कृतावधानं जितबर्हिणध्वनौ
सुरक्तगोपीजनगीतनिःस्वने।
इदं जिघत्सामपहाय भूयसीं
न शस्यमभ्येति मृगीकदम्बकम् ॥ ३३ ॥

असावनास्थापरयावधीरितः
सरोरुहिण्या शिरसा नमन्नपि।
उपैति शुष्यन् कलमः सहाम्भसा
मनोभुवा तप्त इवाभिपाण्डुताम् ॥ ३४ ॥

प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टि, वृष्टेरन्नं ततः प्रजाः" इति स्मरणात् इति भावः ॥ ३२ ॥

कृतेति। जितबर्हिणध्वनौ केकानुकारिणि इत्यर्थः। एतेन षड्जस्वरप्रायं गायति इति गम्यते। यथाह मातङ्गः—"षड्जं मयूरो वदति" इति। गाः पान्ति इति गोपाः तेषां भार्य्या गोप्यः "आतोऽनुपसर्गे कः" इति कप्रत्ययः। "पुंयोगादाख्यायाम्" इति ङीष्। ताः एव जनः सुरक्तः मधुरकण्ठः यः गोपीजनः वल्लवीजनः तस्य गीतनिःस्वने गाने कृतावधानम् एकाग्रचित्तम् इदं पुरोवर्त्ति मृगीकदम्बकं कर्त्तृ भूयसीम् अतिमहतीं जिघत्साम् अत्तुम् इच्छाम्। अदः सन्नन्तात् अप्रत्ययः। "लुङ्सनोर्घस्लृ" इति घस्लादेशः। अपहाय हित्वा शस्यं न अभ्येति न उपैति। गीतासक्त्या क्षुधाम् अपि न गणयति इत्यर्थः ॥ ३३ ॥

असाविति। शिरसा अग्रेण मूर्ध्ना अवनमन् प्रणमन् अपि अनास्थापरया अनादरपरया सरोरुहिण्या अवधीरितः अवज्ञातः अम्भसा सहचरभूतेन इति भावः। शुष्यन् असौ कलमः

अमी समुद्भूतसरोजरेणुना
हृताहृतासारकणेन वायुना ।
उपागमे दुश्चरिता इवापदां
गतिं न निश्चेतुमलं शिलीमुखाः ॥ ३५ ॥
मुखैरसौ विद्रुमभङ्गलोहितैः
शिखाः पिशङ्गीः कलमस्य बिभ्रती ।

शालिविशेषः मनोभुवा तप्तः इव कामार्त्तः इव अभिपाण्डुताम् उपैति । अत्र अनास्थापरया इति प्रकृतसरोरुहिणीविशेषणसामर्थ्यात् अप्रस्तुतनायिकाप्रतीतेः समासोक्तिः । उत्तिष्ठमानायाः सरोरुहिण्याः प्रतीयमानया नायिकया शुद्धभेदे अपि अभेदलक्षणातिशयोक्तिमहिम्ना अवधीरणक्रियासम्बन्धात् निरीक्षन्ती मनोभुवा तप्तः इव इति उत्प्रेक्षा निर्वाहिका इति अतिशयोक्त्यनुप्राणितसमासोक्त्युपमयोः अङ्गाङ्गिभावेन सङ्करः ॥ ३४ ॥

अमी इति । समुद्भूतसरोजरेणुना इति सौरभ्योक्तिः । हृतासारकणेन उपात्ताम्बुकणेन इति शैत्योक्तिः । "धारासम्पात आसारः" इत्यमरः । वायुना हृताः आकृष्टाः अमी शिलीमुखाः भृङ्गाः । आपदाम् उपागमे राजादिभयागमे दुश्चरिताः दुष्टकर्माणः चौरादयः इव । गम्यते इति गतिं गन्तव्यदेशम् । "देशोपायगमे गतिः" इति वैजयन्ती । निश्चेतुं न अलं न समर्थाः । एकत्र वायोः सार्वत्रिकत्वेन उपादानात् अनिश्चयात् अन्यत्र भयान्धत्वात् इति भावः ॥ ३५ ॥

मुखैरिति । विद्रुमभङ्गलोहितैः मुखैः पिशङ्गीः पिशङ्गवर्णाः कलमस्य शिखाः शाल्यग्राणि बिभ्रती व्यक्तशिरीषकोमला

शुकावलिर्व्यक्तशिरीषकोमला
धनुःश्रियं गोत्रभिदोऽनुगच्छति ॥ ३६ ॥

इति कथयति तत्र नातिदूरात्
अथ ददृशे पिहितोष्णरश्मिबिम्बः ।
विगलितजलभारशुक्लभासां
निचय इवाम्बुमुचां नगाधिराजः ॥ ३७ ॥

तमतनुवनराजिश्यामितोपत्यकान्तं
नगमुपरि हिमानीगौरमासाद्य जिष्णुः ।

विकसितशिरीषसवर्णा असौ शुकावलिः गोत्रभिदः इन्द्रस्य धनुषः श्रियम् अनुगच्छति अनुकरोति नानावर्णत्वात् इन्द्रधनुः इव आभाति इति उपमालङ्कारः ॥ ३६ ॥

इतीति। अथ तत्र तस्मिन् पूर्वोक्तयत्ते इति इत्थं कथयति सति न अतिदूरात् अनतिदूरात् ईषद्दूरे इत्यर्थः। नञ अस्य नशब्दस्य सुप्सुपा इति समासः। पिहितोष्णरश्मिबिम्बः तिरोहितार्कमण्डलः इति अौन्नत्योक्तिः। नगाधिराजः हिमाद्रिः विगलितः जलभारः येषां ते तथोक्ताः। अत एव शुक्लभासः द्वयोः अन्यतरस्य विशेष्यत्वविवक्षया विशेषणसमासः। तेषां विगलितजलभारशुक्लभासां शुभ्राणाम् अम्बुमुचां निचयः इव मेघवृन्दम् इव ददृशे दृष्टः ॥ ३७ ॥

तमिति। जिष्णुः अर्जुनः अतनुभिः महतीभिः वनराजिभिः श्यामिताः श्यामलाः उपत्यकान्ताः आसन्नभूमिप्रदेशाः यस्य तं तथोक्तम्। "उपत्यकाद्रेरासन्ना भूमिरूर्द्ध्वमधित्यका" इत्यमरः। "उपाधिभ्यां त्यकन्नासन्नारूढयोः" इति त्यकन्प्रत्ययः। उपरि हिमानीभिः हिमसङ्घातैः गौरं शुभ्रं नगं हिमाद्रिम् आसाद्य

व्यपगतमदरागस्यानुसस्मार लक्ष्मीम्
असितमधरवासो बिभ्रतः सीरपाणेः ॥ ३८ ॥

इति श्रीभारविकृतौ किरातार्जुनीये महाकाव्ये
शरद्वर्णनो नाम चतुर्थः सर्गः ॥ ४ ॥

## पञ्चमः सर्गः।

—*—*—

अथ जयाय नु मेरुमहीभृतः
रभसया नु दिगन्तदिदृक्षया ।

व्यपगतः निवृत्तः मदरागः यस्य तस्य। असितं नीलम् अधरवासः उत्तरीयं बिभ्रतः धृतवतः सीरं हलं पाणौ यस्य तस्य सीरपाणेः हलायुधस्य। "हलायुधो नीलाम्बरो रौहिणेयस्तालाङ्को मुसली हली। सङ्कर्षणः सीरपाणिः" इत्यमरः। "सप्तमी विशेषणे" इति ज्ञापकात् व्यधिकरणपदः बहुव्रीहिः। "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ स्तः" इति सप्तम्याः परनिपातः। लक्ष्मीं शोभाम् अनुसस्मार स्मृतवान्। अत्र सदृशदर्शनेन सदृशान्तरस्य स्मरणात् स्मरणालङ्कारः। "सदृशं सदृशानुभवाद्यत्र स्मर्यते तत् स्मरणम्" इति विद्याधरः ॥ ३८ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
किरातार्जुनीयव्याख्यायां घण्टापथाख्यायां
चतुर्थः सर्गः ॥ ४ ॥

अथ हिमवद्वर्णनम् आरभते त[illegible] कुलकम्

अभिययौ स हिमाचलमुच्छ्रितं
समुदितं नु विलङ्घयितुं नभः ॥ १ ॥

तपनमण्डलदीपितमेकतः
सततनैशतमोवृतमन्यतः।
हसितभिन्नतमिस्र[illegible]
शिवमिवानु[illegible]

[illegible]। अथेति। अथ अनन्तरं [illegible] अर्जुनः [illegible]महोभृतः हिमाद्रे जयाय नु जयार्थं वा। नुशब्द अत्र वितर्के। "नु पृच्छायां वितर्के च" इत्यमरः। रभसः वेगः। "रभसो वेगहर्षयोः" इति वैजयन्ती। तद्वत्या रभसया अतीव उत्कटतया इति यावत्। अत्र आदित्वात् अच्प्रत्ययः। दिगन्तानां दिदृक्षया नु द्रष्टुम् इच्छया वा नभः अन्तरिक्षं विलङ्घयितुं नु अतिक्रमितुं वा समुदितं समुत्पतितम् इव स्थितम् इत्यर्थः। कुतः उच्छ्रितम् उन्नतं हिमस्य अचलं हिमाचलम् अभिययौ। अत्र अभियोति-[illegible]नानेकफलविशिष्टोन्नत्यगुणनिमित्तोदितादिक्रियोत्प्रेक्षा सा च व्यञ्जकाप्रयोगात्। प्रतीयमाना इति संक्षेपः। द्रुतविलम्बितं वृत्तम्—"द्रुतविलम्बितमाह नभौ भरौ" इति लक्षणात् ॥ १ ॥

तपनेति। एकतः एकस्मिन् भागे। सार्वविभक्तिकः तसिः। तपनमण्डलेन दीपितं प्रकाशितम्। अन्यतः अन्यस्मिन् भागे सततेन अनिविडेन नैशेन निशिभवेन तमसा वृतम् एकत्र अरुणतया च अन्यत्र सङ्गतम् इत्यर्थः। अत एव पुरः अग्रे हसितेन अट्टहासेन भिन्नतमिस्रचयं निरस्ततमस्तोमं तथा गजचर्मणा अनुगतं पश्चाद्व्याप्तम्। "पश्चात्सादृश्ययोरनु" इत्यमरः। शिवम्

क्षितिनभःसुरलोकनिवासिभिः
कृतनिकेतमदृष्टपरस्परैः।
प्रथयितुं विभुताममिनिर्मितं
प्रतिनिधिं जगतामिव शम्भुना ॥ ३ ॥
भुजगराजसितेन नभःश्रिता
कनकराजिविराजितसानुना।
समुदितं निचयेन तड़िवतीं
लघयता शरदम्बुदसंहतिम् ॥ ४ ॥

इव स्थितम्। तपनतेजःप्रसारः अपि अस्य कारणम् इव कुत्र-चित् परिसमाप्यते इति महत्त्वातिशयोक्तिः ॥ २ ॥

क्षितीति। परस्परैः अन्योन्यैः। "कर्मव्यतिहारे सर्वनाम्नो द्वे भवतः" इति वक्तव्यत्वात् परशब्दस्य द्विर्भावः। "समासवच्च बहुलं यदा समासवत् प्रथमैकवचनं तदा पूर्वपदस्य" इति वक्तव्यत्वात् प्रथमैकवचनम्। सुट् कस्कादित्वात् विसर्जनीयस्य सत्वं बहुवचनं च अन्योन्यशब्दवत्। यथा माघे—"अन्योन्येषां पुष्करैरामृशन्त" इति। अदृष्टाः परस्परे यैः ते अदृष्टपरस्पराः तैः तथोक्तैः। क्षितौ नभसि सुरलोके च निवसन्ति इति तैः तथोक्तैः भूर्भुवःस्वर्लोकवासिभिः इत्यर्थः। कृतनिकेतं कृता-स्पदम् अत एव शम्भुना विभुतां स्वसामर्थ्यं प्रथयितुम् अभि-निर्मितं जगतां प्रतिनिधिं प्रतिकृतिम् इव स्थितम् इति उत्-प्रेक्षा। "प्रतिकृतिरर्चा पुंसि प्रतिनिधिरुपमोपमानं स्यात्" इत्यमरः। त्रैलोक्यश्लाघ्योपमम् अपरिच्छेद्यं च इति भावः ॥३॥

भुजगेति। पुनश्च भुजगराजसितेन शेषाहिधवलेन नभः-श्रिता गगनस्पृशा [illegible] राजिभिः रेखाभिः विराजिताः

मणिमयूखचयांशुकभासुराः
सुरवधूपरिभुक्तलतागृहाः ।
दधतमुच्चशिलान्तरगोपुराः
पुर इवोदितपुष्पवना भुवः ॥ ५ ॥

अविरतोज्झितवारिविपाण्डुभिः
विरहितैरचिरद्युतितेजसा ।
उदितपक्षमिवारतनिःस्वनैः
पृथुनितम्बविलम्बिभिरम्बुदैः ॥ ६ ॥

सानवः यस्य तेन तथोक्तेन अत एव तडित्वतीं शरदम्बुदसंहतिं लघतया लघूकुर्वता तत्तुल्येन इत्यर्थः। अत एव उपमालङ्कारः। निचयेन शिखरसमुच्चयेन समुदितं समुन्नतम् ॥ ४ ॥

मणीति। पुनः मणिमयूखचयाः एव अंशुकानि पटकाण्डादीनि तैः भासुराः सुरवधूभिः परिभुक्ताः लताः गृहाणि इव यासु ताः तथोक्ताः। उच्चानि शिलान्तराणि शिलामध्यानि गोपुराणि इव यासु ताः उदितानि ऊर्जितानि पुष्पाणां वनानि यासु ताः अत एव पुरः इव नगराणि इव स्थिताः भुवः दधतम् ॥ ५ ॥

अविरतेति। पुनश्च अविरतम् अविच्छिन्नम् उज्झितं वारि यैः तं अविरतोज्झितवारयः वृष्टिमन्तः इत्यर्थः। अत एव विपाण्डवश्च तैः अविरतोज्झितवारिविपाण्डुभिः। अतः हिमवत्पक्षत्वं सम्भवति इति भावः। अचिरद्युतितेजसा विरहितैः विद्युत्तेजोरहितैः। आरतनिःस्वनैः प्रशान्तगर्जितैश्च अन्यथा पक्षत्वहानिः स्यात् इति भावः। पृथुनितम्बविलम्बिभिः महाकटकसङ्गिभिः। "कटकोऽस्त्री नितम्बोऽद्रेः" इत्यमरः। अम्बुदैः

दधतमाकरिभिः करिभिः क्षतैः
समवतारसमैरसमैस्तटैः।
विविधकामहितामहिताम्भसः
स्फुटसरोजवना जवना नदीः॥ ७॥
नवविनिद्रजपाकुसुमत्विषां
द्युतिमतां निकरेण महाश्मनाम्।

उदितपक्षं सञ्जातपक्षम् इव स्थितम्। प्राक् छिन्नपक्षस्य अपि हिमाद्रेः धवलाम्बुदसम्बन्धात् पुनः पक्षोत्थानम् उत्प्रेक्ष्यते॥६॥

दधतमिति। पुनश्च आकरः खनिः एषाम् अस्ति योनित्वेन इति आकरिभिः आकरजैः। "खनिः स्त्रियामाकरः स्यात्" इत्यमरः। करिभिः गजैः कर्तृभिः क्षतैः व्रणैः समवतारेषु तीर्थेषु समैः अविषमैः असमैः असदृशैः अतादृशैः अनुपमैः इत्यर्थः तटैः उपलक्षिताः ताः महिताम्भसः श्लाघ्योदकाः अत एव विविधेभ्यः कामिभ्यः अवगाहनाद्युपभोगिभ्यः हिताः अनुकूलाः। "चतुर्थी तदर्थे" इत्यादिना समासः। स्फुटानि विकसितानि सरोजवनानि यासु ताः जवनाः वेगवतीः। "जुचङ्क्रम्य" इत्यादिना युच्। नदीः दधतम्। यमकवृत्त्यनुप्रासभेदत्वात् यमकालङ्कारः। अर्थालङ्कारः तु अभ्युच्चयः तस्य अतिदुष्करत्वात् रसपोषः अपि न आद्रियते। तदुक्तम् "प्रायशो यमके चित्रे रसवृद्धिर्न मृग्यते"॥ ७॥

नवेति। पुनश्च नवानि विनिद्राणि च यानि च जपाकुसुमानि ताम्रपुष्पिकाकुसुमानि तेषां त्विषः इव त्विषः येषां ते तेषाम् "ओड्रपुष्पं जपापुष्पं रूपिका ताम्रपुष्पिका" इति वाग्भटः। द्युतिमतां महाश्मनां मणीनां पद्मरागाणाम् इत्यर्थः

विहितसान्ध्यमयूखमिव क्वचित्
निचितकाञ्चनभित्तिषु मानुषु ॥ ८ ॥

पृथुकदम्बकदम्बकराजितं
ग्रथितमालतमालवनाकुलम्।
लघुतुषारतुषारजलश्च्युतं
धृतसदानसदाननदन्तिनम् ॥ ९ ॥

रहितरत्नचयान्न शिलोच्चयान्
अपलताभवना न दरीभुवः।

विशेषणसामर्थ्यात्। निकरेण समूहेन हेतुना क्वचित् निचिताः सङ्कुलिताः काञ्चनभित्तयः येषु तेषु सानुषु विहिताः सान्ध्याः सन्ध्यायां भवाः मयूखाः यस्मिन् तम् इव स्थितम्। काञ्चनभित्तिषु पद्मरागप्रभाप्रसरात् उदितसन्ध्यारागः इव भाति इति उत्प्रेक्षा ॥ ८ ॥

पृथ्विति। पुनश्च पृथुभिः कदम्बकदम्बकैः नीपकुसुमसमूहैः स्तवकैः राजितम्। "कदम्बमाहुः सिद्धार्थे नीपे च निकुरम्बके" इति उभयत्र अपि विश्वः। ग्रथितमालैः बद्धपङ्क्तिभिः तमालवनैः तापिच्छवनैः आकुलम् आकीर्णम्। "कालस्कन्धः तमालः स्यात्तापिच्छोऽपि" इत्यमरः। लघुतुषारम् अल्पसीकरं यत् तुषारजलं हिमोदकं तत् श्च्योतति वर्षति तं तथोक्तम्। "तुषारौ हिमसीकरौ" इति शाश्वतः। "अन्येभ्योऽपि दृश्यते" इति क्विप्। सदानाः समदाः सदाननाः शोभनाननाश्च ये दन्तिनः ते धृताः येन तं तथोक्तम् ॥ ९ ॥

रहितेति। पुनश्च रहितरत्नचयान् रहितः परित्यक्तः रत्न-

विपुलिनाम्बुरुहा न सरिद्वधूः
अकुसुमान् दधतं न महीरुहः ॥ १० ॥
व्यथितसिन्धुमनीरशनैः शनैः
अमरलोकवधूजघनैर्घनैः।
फणभृतामभितो विततं ततं
दयितरम्यलतावकुलैः कुलैः ॥ ११ ॥
समुरचापमनेकमणिप्रभैः
अपपयोविशदं हिमपाण्डुभिः।

वयः यैः तान् रत्नराशिरहितान् शिलोच्चयान् शिखराणि न :धतम् अपलताभवनाः लतागृहरहिताः दरीभुवः गुहाप्रदेशान् न दधतम्। "दरी तु कन्दरो वा स्त्री देवखातबिले गुहा" इत्यमरः। विगतानि पुलिनानि अम्बुरुहाणि च यासां ताः सरितः बध्वः इव ताः सारिद्वधूः न दधतम्। अत्र सरितां वध्वौपम्यात् पुलिनाम्बुरुहाणां वदनजघनौपम्यं गम्यते। अकुसुमान् महीरुहः वृक्षान् न दधतं किन्तु रत्नादिसम्पन्नान् एव शिलोच्चयादीन् दधतम् इत्यर्थः। महाविभाषया न अत्र नञ्समासः ॥ १० ॥

व्यथितेति। पुनश्च अनीरसनैः अनिर्मेखलैः सरशनैः इत्यर्थः। घनैः निविड़ैः अमरलोकवधूजघनैः शनैः मन्दं मन्दं व्यथितसिन्धुं चोभितनदीकम् अयम् अपरः स्वर्गः इति भावः। दयिताः प्रियाः रम्याः लताः वीरुधः वकुलाः केसराश्च येषां तैः तथोक्तैः। "विशारदो मद्यगन्धो वकुलः सर्वकेसरः" इति वैद्यके। फणभृतां कुलैः अभितः ततं व्याप्तं तथा विततं विस्तृतम् ॥ ११ ॥

अविचलं शिखरैरुपबिभ्रतं
ध्वनितसूचितमम्बुमुचां चयम्॥ १२॥
विकचवारिरुहं दधतं सरः
सकलहंसगणं शुचि मानसम्।
शिवमगात्मजया च कृतेर्ष्यया
सकलहं सगणं शुचिमानसम्॥ १३॥
ग्रहविमानगणानभितो दिवं
ज्वलयतौषधिजेन कृशानुना।

ससुरेति। अनेका विचित्रा मणिप्रभा येषां तैः तथोक्तैः हिमेन पाण्डुभिः शिखरैः ससुरचापं सेन्द्रचापम् अपपयः निर्जलः अत एव विशदश्च तम् अपपयोविशदम् अविचलं दैवात् निश्चलं च अतः शिखरशङ्का अस्य अभूत् इत्यर्थः। किन्तु ध्वनितेन गर्जितेन सूचितं ज्ञापितम् अम्बुमुचां चयम् उपबिभ्रतम्। अत्र कविकल्पितसादृश्यात् शिखरैः मेघसन्देहे मेघनिश्चयात् सन्देहालङ्कारः॥ १२॥

विकचेति। पुनश्च विकचवारिरुहं नित्यविकसितारविन्दम् इत्यर्थः वृत्तिसामर्थ्यात्। कलहंसगणैः सह वर्त्तते इति सकलहंसगणम्। "कादम्बः कलहंसः स्यात्" इत्यमरः। यद्वा सकलाः सर्वे हंसगणाः यस्मिन् तत् तथोक्तम्। शुचि नित्यनिर्मलं मानसं मानसाख्यं सरः दधतम्। किञ्च कृतेर्ष्यया कुतश्चित् निमित्तात् कुपितया इत्यर्थः अगात्मजया पार्वत्या सकलहं सविवादं सगणं सप्रमथम्। "गणाः प्रमथसङ्घौघाः" इति वैजयन्ती। शुचिमानसम् अविद्याविनिर्मुक्तचित्तं शिवं च दधतम्। एतेन सकलशैलवैलक्षण्यमस्य उक्तम्॥ १३॥ म

मुहुरनुस्मरयन्तमनुक्षपं
त्रिपुरदाहमुमापतिसेविनः ॥ १४ ॥

विततशीकरराशिभिरुच्छ्रितै-
रुपलरोधविवर्त्तिभिरम्बुभिः।
दधतमुन्नतसानुसमुद्धतां
धृतसितव्यजनामिव जाह्नवीम् ॥ १५ ॥

॥ कुलकम् ॥

अहेति। दिवम् अभितः दिवः अभिमुखम्। "अभितः परितः" इत्यादिना द्वितीया। ग्रहाः चन्द्रादयः विमानानि देवयानानि च। "व्योमयानं विमानोऽस्त्री" इत्यमरः। तेषां गणान् ज्वलयता प्रदीपयता। "मितां ह्रस्वः" इति ह्रस्वः। ओषधिजेन तृणविशेषजन्येन कृशानुना अनुक्षपं प्रतिक्षपम्। वीप्सायाम् अव्ययीभावः। उमापतिसेविनः प्रमथादीन्। "गति बुद्धि" इत्यादिना द्विकर्मत्वम्। त्रयाणां पुराणां समाहारः त्रिपुरम्। "तद्धितार्थ" इत्यादिना समासः। "पात्रादिभ्यः प्रतिषेधो वक्तव्यः" इति स्त्रीलिङ्गप्रतिषेधः। तस्य दाहं त्रिपुरदाहं मुहुः अनुस्मरयन्तम्। ननु "अधीगर्थ" इत्यादिना दाहम् इत्यत्र षष्ठी किं न स्यात् तस्याः शेषार्थे विधानात् शेषस्य अविवक्षितत्वात्। अत्र कविसम्मतसादृश्यात् स्मृतिः इति स्मरणालङ्कारः ॥ १४ ॥

विततेति। विततशीकरराशिभिः विस्तृतशीकरपुञ्जैः उच्छ्रितैः उत्पतितैः कुतः उपलरोधेन विवर्त्तिभिः अम्बुभिः हेतुभिः धृतसितव्यजनाम् इव गृहीतामलचामराम् इव

अनुचरेण धनाधिपतेरथो
नगविलोकनविस्मितमानसः।
स जगदे वचनं प्रियमादरात्
मुखरतावसरे हि विराजते ॥ १६ ॥
अलमेष विलोकितः प्रजानां
सहसा सन्ततिमंहसां विहन्तुम्।
घनवर्त्म सहस्रधेव कुर्वन्
हिमगौरैरचलाधिपः शिरोभिः ॥ १७ ॥

स्थिताम् इति उत्प्रेक्षा। उन्नतमानुषु समुद्धतां वहन्तीं जाह्नवीं गङ्गां दधतम् ॥ १५ ॥

अनुचरेणेति। अथो अनन्तरम्। "मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ" इत्यमरः। धनाधिपतेः अनुचरेण यक्षेण नगविलोकनविस्मितमानसः सः अर्जुनः। आदरात् प्रियं वचनं जगदे गदितः। गदतेः ब्रुवर्थस्य दुहादित्वात् प्रधाने कर्म्मणि लिट्। अपृष्टपरिभाषणदोषं परिहरति। मुखरतेति। मुखरता वाचालत्वम् अपृष्टपरिभाषित्वम् इति यावत्। अवसरे श्रोतुः आकाङ्क्षासमये विराजते हि। आकाङ्क्षितम् अपृष्टः अपि ब्रूयात् इति भावः ॥ १६ ॥

अलमिति। हिमेन गौरैः शुभ्रैः शिरोभिः शिखरैः घनवर्त्म खं सहस्रधा कुर्वन् विपाटयन् इव इति उत्प्रेक्षा। एषः अचलाधिपः हिमवान् विलोकितः दृष्टमात्रः एव प्रजानाम् अंहसां सन्ततिं पापसङ्घातं सहसा विहन्तुम् अलं समर्थः। "पर्य्याप्तिवचनेष्वलमर्थेषु" इति तुमुन्। औपच्छन्दसिकं वृत्तम्।

इह दुरधिगमैः किञ्चिदेवागमैः
सततमसुतरं वर्णयन्त्यन्तरम्।
अमुमतिविपिनं वेद दिग्व्यापिनं
पुरुषमिव परं पद्मयोनिः परम्॥ १८॥

रुचिरपल्लवपुष्पलतागृहैः
उपलसज्जलजैर्जलराशिभिः।
नयति सन्ततमुत्सुकतामयं
धृतिमतीरुपकान्तमपि स्त्रियः॥ १९॥

"पर्य्यन्तेयौं तथैव शेषं चौपच्छन्दसिकं सुधीभिरुक्तम्" इति स्मरणात्॥ १७॥

इहेति। इह अस्मिन् पर्वते सुतरं न भवति इति असुतरं दुस्तरम् इत्यर्थः। तरतेः खल्प्रत्ययः। अन्तरं मध्यभागं पुरुषे तु अन्तरं तत्त्वं दुरधिगमैः दुर्ग्रहैः दुःखेन अधिगन्तुम् अशक्यैः आगमैः पुराणादिभिः किञ्चित् एव सततं वर्णयन्ति। न तु कदाचित् प्रत्यक्षेण अपि निःशेषं ज्ञातुम् अशक्यत्वात् इति भावः। किन्तु अतिविपिनम् अतिगहनं दिग्व्यापिनम् अमुं गिरिं परं पुरुषं परमात्मानम् इव परं केवलम्। "परमव्यय-मिच्छन्ति केवलः" इति विश्वः। पद्मयोनिः ब्रह्मा एव वेद न अन्यः इत्यर्थः। "विदो लटो वा" इति णलादेशः। अत्र उपमा-यमकयोः संसृष्टिः। क्षमावृत्तम्। "तुरगरसयतिर्नौ भरौ गः क्षमा"॥ १८॥

रुचिरपल्लवेति। अयं गिरिः। रुचिराणि पल्लवानि पुष्पाणि च येषां ते तथाभूताः लतागृहाः येषु तैः तथोक्तैः उप-लसज्जलजैः जलराशिभिः सरोभिः करणैः उपकान्तं कान्त-

सुलभैः सदा नयवताऽयवता
निधिगुह्यकाधिपरमैः परमैः।
अमुना धनैः क्षितिभृताऽतिभृता
समतीत्य भाति जगती जगती ॥ २० ॥
अखिलमिदममुष्य गौरीगुरोः
त्रिभुवनमपि नैति मन्ये तुलाम्।

समीपे धृतिमतीः धैर्य्यवतीःअपि समीपस्थान् अपि प्रियान् न गणयन्तीः। मानिनीः इत्यर्थः। स्त्रियः सन्ततम् उत्सुकतां नयति तासां मानग्रन्थिं शिथिलयति इत्यर्थः। अथवा उपकान्तं धृतिमतीः तुष्टिमतीः अपि सुरतहृष्टाः अपि पुनः उत्सुकतां नयति इत्यर्थः। उभयत्र अपि उद्दीपकत्वातिशयोक्तिः। वृत्तम् उक्तम ॥ १९ ॥

सुलभैरिति। नयवता नीतिमता अयवता भाग्यवता च सदा सुलभैः न अन्यैः इत्यर्थः। "अयः शुभावहो विधिः" इत्यमरः। निधीनां महापद्मादीनाम्। "अस्त्री पद्मो महापद्मः शङ्खो मकरकच्छपौ। मुकुन्दनन्दनीलाश्च वर्चाः स्युर्निधयो नव" इत्यमरः। गुह्यकानां च अधिपं कुवेरं रमयन्ति इति तथोक्तैः। "कर्म्मण्यण्"। परमैः उत्कृष्टैः धनैः करणैः अमुना क्षितिभृता हेतुना अतिभृता पूर्णा सती जगती मही जगती स्वर्गपाताललोकौ समतीत्य अतीत्य भाति। अमानुषैः अपि दुर्लभाः सम्पदः अत्र सम्भवन्ति इति भावः। अत्र धनाधिपतेः इति पदार्थस्य विशेषणगत्या जगदतिक्रमणहेतुत्वोक्त्या काव्यलिङ्गं तस्य यमकेन संसृष्टिः। प्रमिताक्षरा वृत्तम्। "प्रमिताक्षरा सजससैरुदिता" इति लक्षणात् ॥ २० ॥

अधिवसति सदा यदेनं जनै:
अविदितविभवो भवानीपतिः॥ २१॥
वीतजन्मजरसं परं शुचि
ब्रह्मणः पदमुपैतुमिच्छताम्।

अखिलमिति। अमुष्य गौरीगुरोः हिमवतः इदम् अखिलं त्रयाणां भुवनानां समाहारः त्रिभुवनम् अपि। "तद्धितार्थ" इत्यादिना समासः। पात्रादित्वात् स्त्रीत्वप्रतिषेधः। तुलां साम्यं न एति इति मन्ये। यत् यतः जनैः अविदितविभवः अज्ञातमहिमा भवानीपतिः सदा एनं गिरिम् अधिवसति अस्मिन् वसति इत्यर्थः। "उपान्वध्याङ् वस" इति कर्मत्वम्। अतः अयं धर्मक्षेत्रम् इति भावः। प्रभावृत्तम्। "स्वरशरविरतिर्नौ नरौ प्रभा" इति लक्षणात्॥ २१॥

वीतेति। वीते निवृत्ते जन्मजरसौ यस्य तत् वीतजन्मजरसम्। "जराया जरसन्यतरस्याम्" इति जरसादेशः। अत्र तदन्तविधिः इष्टत्वात् परत्वेन स्यादेशबाधकत्वात् च। तथाहि "टाङसिङसामिनात् स्याः" इति स्यादेशबाधनात्। "परत्वाज्जरसादेशं बभाषे भाष्यकृत् स्वयम्। सूत्रकारमते यत्तु ज्ञापकात् परबाधनम् भवेत् तदपि टाङस्योर्न पुनर्ङसि सम्भवेत्। मतद्वयेऽपि तत्तुल्यं ङसि यत्पूर्वबाधनम्। परत्वाज्जरसादेशस्तत्र स्यात् स्यादेशबाधनात्। ज्ञापकत्वात टाङस्योर्यावादेशा विनादिति। ईकारदीर्घयोस्तत्र वैयर्थ्यं तत्तु तौ विना। एत्वे सवर्णदीर्घे च रूपसिद्धिर्भवेद्यतः। व्यर्थसूत्राक्षरत्यागात् तेन तज्ज्ञापकं फणी। स्वातन्त्र्याज्जरसादेशे जगौ पूर्वस्य बाधनात्। समर्थनप्रपञ्चस्तु भाष्यकैयटयोः स्फुटः॥"

आगमादिव तमोपहादितः।
सम्भवन्ति मतयो भवच्छिदः॥ २२॥
दिव्यस्त्रीणां सचरणलाक्षारागा
रागायाते निपतितपुष्पापीड़ाः।

अत्र यदत्र जयस इति केषाञ्चित् पाठान्तरकल्पनं तत् अज्ञान-विजृम्भितम् एव। ब्रह्मणः परमात्मनः सम्बन्धि परम् उत्कृष्ट शुचि निष्कलङ्कं पद्यते इति पदं स्थानं तादात्म्यलक्षणम् मुक्तिम् इत्यर्थः। उपैतुं प्राप्तुम् इच्छतां मुमुक्षूणाम् आगमात् शास्त्रात् इव तमः अपघ्नन्ति इति तमोऽपहात् अविद्यानिव र्तकत्वात्। "अपेः क्लेशतमसोः" इति डप्रत्ययः। इतः अस्मात् गिरेः भवं छिन्दन्ति इति भवच्छिदः संसारनिवर्त्तकाः। "सत्-सूद्विष" इत्यादिना क्विप्। मतयः तत्त्वज्ञानानि सम्भवन्ति। क्षेत्रविशेषस्य अपि ज्ञानोपपादकत्वात् इत्याशयः। न च केवलं भोगभूमिः किन्तु मुक्तिक्षेत्रम् अपि इति तात्पर्य्यार्थः। रथोद्धता वृत्तम्। तल्लक्षणम् "रान्नराविह रथोद्धता लगौ" इति॥ २२॥

दिव्येति। अस्मिन् गिरौ चरणलाक्षारागैः सह वर्त्तन्ते ताः तथोक्ताः धेनुकपुरुषायितादिबन्धेषु स्त्रियः पादतलस्पर्शात् तद्रागाङ्किताः इत्यर्थः। निपतिताः व्यानतकरणे स्त्रीणाम् अधो मुखत्वात् भ्रष्टाः पुष्पापीड़ाः कुसुमशेखराः यासु ताः तथोक्ताः। "शिखास्वापीड़शेखरौ" इत्यमरः। पीड़ाभाजः विमर्दभाजः भङ्गिमत्यः इत्यर्थः। भ्रमरप्रेङ्खोलितादौ सर्वतः कटिपरिभ्रमण-सम्भवात् इति भावः। कुसुमैः चिताः कुसुमचिताः। इभमाजा-गादिकरणेषु स्तनभुजाद्यवयवानां शय्यातलस्थायित्वात् मार्दवाय

पीडाभाजः कुसुमचिताः साशंसं
शंसन्त्यस्मिन् सुरतविशेषं शय्याः ॥ २३ ॥
गुणसम्पदा समधिगम्य परं
महिमानमत्र महिते जगताम्।

कुसुमचिताः कुसुमास्तृताः इत्यर्थः। दिव्यस्त्रीणां सम्बन्धिन्यः शेरते आसु इति शय्याः तल्पानि। "संज्ञायां समजनिपद" इत्यादिना क्यप्। रागायाते रागोद्रेके सति यः साशंसः सतृष्णः सुरतविशेषः तं जातौ एकवचनं सुरतविशेषान् इत्यर्थः। शंसन्ति सूचयन्ति विज्ञापयन्ति इत्यर्थः। अत्र लाक्षारागादिपदार्थानां सुरतविशेषगमनं प्रति विशेषणगत्या हेतुत्वोक्त्या काव्यलिङ्गम् अलङ्कारः यमकेन संसृज्यते। जलधरमालावृत्तम् "भ्मौ स्मौ चेत् स्याज्जलधरमाला ख्याता" इति लक्षणात्। धेनुकादिबन्धलक्षणं तु रतिरहस्ये। "न्यस्तहस्तयुगला निजे पदे योषिदेति कटिरूढ़वल्लभा। अग्रतो यदि शनैरधोमुखी धेनुकं वृषवदुन्नते प्रिये। १। स्वेच्छया भ्रमति वल्लभेऽपि या योषिदाचरति वल्लभायितम्। व्यानतं रतमिदं यदि प्रिया स्यादधोमुखचतुष्पदाकृतिः। २। तत्कटिं समधिरुह्य वल्लभः स्याद्वृषादिपशुसंस्थितिस्थितः। चक्रवद्भ्रमति कुञ्चितत्रिका भ्रामरं निगदितं समुद्धतम्। ३। सर्वतः कटिपरिभ्रमो यदि प्रेङ्खपूर्वमिदमुक्तमारतम्। भूगतस्तनभुजास्यमस्तकामुन्नतां स्वयमधोमुखीं स्त्रियम्। ४। क्रामति स्वकरकृष्टमेहने वल्लभे करिरतं तदुच्यते"। "प्रसारिते पाणिपादे शय्यास्पर्शिमुखोरसि। उन्नतायाः स्त्रियाः कक्ष्यां मार्जारीकमणं विदुः" इति ग्रन्थान्तरे ॥ २३ ॥

गुणेति। जगतां महिते जगद्भिः पूजिते पूज्यमाने। "मति-

नयशालिनि श्रिय इवाधिपतौ
विरमन्ति न ज्वलितुमोषधयः ॥ २४ ॥
कुररीगणः कृतरवस्तरवः
कुसुमानता सकमलं कमलम् ।
इह सिन्धवश्च वरणावरणाः
करिणां मुदे सनलदानलदाः ॥ २५ ॥

वुद्धि” इत्यादिना वर्त्तमाने क्तः “क्तस्य च वर्त्तमाने” इति षष्ठी । अत्र हिमवति ओषधयः तृणज्योतींषि नयशालिनि अधिपतौ नीतिसम्पन्ने राज्ञि श्रियः सम्पद इव गुणसम्पदा चेत्रगुणसम्पत्त्या अन्यत्र सन्ध्यादिगुणसम्पदा परं महिमानं उभयत्र अपि प्रकाशसामर्थ्यं समधिगम्य ज्वलितुं प्रकाशितुं न विरमन्ति अविरतं ज्वलन्ति इत्यर्थः । अन्यत्र रात्रादौ इव इति भावः ॥ २४ ॥

कुररीति । इह अद्रौ कुररीगणः उत्क्रोशसङ्घः । “उत्क्रोशकुररौ समौ” इत्यमरः । कृतरवः कृतारवः तरवः कुसुमैः आनताः कमलं जलं सकमलं सपद्मम् । “कमलं जलपद्मयोः” इति विश्वः । वरणाः द्रुमाः आवरणं यासां ताः वरणावरणाः । “वरणो वरुणः सेतुस्तिक्तशाकः कुमारकः” इत्यमरः । सनलदाः सोशीराः । “मूलेऽस्योशीरमस्त्रियाम् । अभयं नलदं सेव्यम्” इत्यमरः । अनलं सन्तापं द्यन्ति खण्डयन्ति शमयन्ति इति अनलदाः । सनलदाश्च ताः अनलदाः सिन्धवः नद्यः करिणां मुदे भवन्ति इति शेषः । न कुत्र अपि उक्तवैपरीत्यम् इति भावः ॥ २५ ॥

साद्दृश्यं गतमपनिद्रचूतगन्धैः
आमोदं मदजलसेकजं दधानः ।
एतस्मिन् मदयति कोकिलानकाले
लीनालिः सुरकरिणां कपोलकाषः ॥२६॥
सनाकवनितं नितम्बरुचिरं
चिरं सुनिनदैर्नदैर्वृतममुम् ।

साद्दृश्यमिति । एतस्मिन् पर्वते अपनिद्रचूतगन्धैः साद्दृश्यं गतं फुल्लाम्रपुष्पसदृशं मदजलसेकजम् आमोदं परिमलं दधानः बिभ्राणः । अत एव लीनालिः संसक्तभृङ्गः सुरकरिणां कष्यते अनेन इति काषः । कपोलानां काषः कषणस्थानं द्रुमस्कन्धादि । अकाले वसन्तातिरिक्ते काले अपि कोकिलान् मदयति । "मितां ह्रस्वः" इति ह्रस्वः । अत्र वसन्तरूपकारणाभावे अपि मदाख्यकार्य्योत्पत्तिकथनात् विभावनालङ्कारः । तदुक्तम् । "कारणेन विना कार्य्यस्योत्पत्तिः स्याद्विभावना" इति । सा च चूतगन्धैः साद्दृश्यम् इति उपमया आमोदं दधानः इति पदार्थहेतुककाव्यलिङ्गेन च अङ्गाङ्गिभावेन सङ्कीर्य्यते । किं च कोकिलानां मदगन्धकृतनूतनमदःभ्रान्त्या भ्रान्तिमदलङ्कारः व्यज्यते । प्रहर्षिणीवृत्तम् । "म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्" इति लक्षणात् ॥ २६ ॥

सनाकेति । पुनश्च सनाकवनितं साप्सरस्कं नितम्बैः कटकैः रुचिरम् । सुनिनदैः सुघोषैः नदैः प्रवाहैः वृतम् अमुम् अमुष्मिन् गिरौ इत्यर्थः । "उपान्वध्याङ्वसः" इति कर्म्मत्वम् । अवतः अधोलोकरक्षकस्य फणवतः नागराजस्य मता इष्टा । "मतिबुद्धि" इत्यादिना वर्त्तमाने क्तः । तद्योगात्

मता फणावतोऽवतो रसपरा
परास्तवसुधा सुधाधिवसति ॥ २७ ॥
श्रीमल्लताभवनमोषधयः प्रदीपाः
शय्या नवानि हरिचन्दनपल्लवानि ।
अस्मिन् रतिश्रमनुदश्च सरोजवाताः
स्मर्तुं दिशन्ति न दिवः सुरसुन्दरीभ्यः ॥ २८
ईशार्थमम्भसि चिराय तपश्चरन्त्याः
यादोविलङ्घनविलोलविलोचनायाः ।

षष्ठी । रसेन परा उत्कृष्टा । परास्तवसुधा त्यक्तभूलोका सुधा अमृतं चिरम् अधिवसति । अतः अन्यत्र भूमण्डले कुत्रापि सुधा नास्ति इत्यर्थः । मेरुप्रभावः अयं गिरिः इति भावः । अत्र प्रस्तुतविशेषणसामर्थ्यात् अप्रस्तुतमेरुप्रतीतिः समासोक्तिः अलङ्कारः स च यमकेन संसृज्यते । जलोद्धतगतिवृत्तम् । "रसैर्जसजसाजलोद्धतगतिः" इति लक्षणात् ॥ २७ ॥

श्रीमदिति । अस्मिन् अद्रौ श्रीमत् समृद्धिमत् लता एव भवनम् ओषधयः तृणज्योतींषि एव प्रदीपाः नवानि हरिचन्दनपल्लवानि सुरतरुकिसलयानि एव शय्याः । "हरिचन्दनमाख्यातं गोशीर्षे सुरपादपे" इति विश्वः । रतिश्रमनुदः सुरतश्रमहारिणः सरोजवाताश्च सुरसुन्दरीभ्यः । क्रियाग्रहणात् चतुर्थी । दिवः दिवम् । "अधीगर्थ" इत्यादिना कर्मणि षष्ठी । स्मर्तुं न दिशन्ति । विस्मारयन्ति इत्यर्थः । स्वर्गात् अपि अतिशयितः अयं अस्मौ इति भावः । अत्र पूर्वार्द्धे रूपकत्रयं स्फुटम् एव ॥ २८ ॥

आलम्बताग्रकरमत्र भवो भवान्याः
श्च्योतन्निदाघसलिलाङ्गुलिना करेण ॥२९॥
येनापविद्धसलिलः स्फुटनागसद्मा
देवासुरैरमृतमम्बुनिधिर्ममन्थे ।

ईशार्थमिति । ईशाय इति ईशार्थं यथा तथा इति क्रिया विशेषणम् । "अर्थेन सह नित्यसमासः सर्वलिङ्गता च वक्तव्या" । चिराय चिरम् अम्भसि तपः चरन्त्याः अत एव यादोविलङ्घनविलोलविलोचनायाः जलजन्तुविघट्टितचलेक्षणायाः तपसः अपि अधिकदृष्ट्या एव विलोभयन्त्याः इति भावः । "यादांसि जलजन्तवः" इत्यमरः । भवान्याः भवपत्न्याः प्रयोगकालापेक्षः अयं निर्देशः । "इन्द्रवरुणभव" इत्यादिना ङीष् आनुगागमश्च । करैकदेशस्य अपि करत्वात् अग्रश्च असौ करश्च इति समानाधिकरणे समासः । अत एव वामनः । "हस्ताग्राग्रहस्तयोर्गुणगुणिनोर्भेदाभेदौ" इति । तम् अग्रकरं भवः शिवः श्च्योतन्निदाघसलिलाङ्गुलिना स्रवत्स्वेदाङ्गुलिना इति सात्त्विकोक्तिः । करेण अत्र गिरौ आलम्बत गृहीतवान् । अत्र अद्भुतातीतवृत्तान्तस्य प्रत्यक्षवत् अभिधानात् भाविकालङ्कारः । "अतीतानागते यत्र प्रत्यक्षवदलक्षिते । अत्यद्भुतार्थकार्य्यत्वाद्भाविकं तदुदाहृतम्" इति लक्षणात् । वसन्ततिलकावृत्तम् । "उक्ता वसन्ततिलका तभजा जगौ गः" इति लक्षणात् ॥ २९ ॥

येनेति । देवाश्च असुराश्च तैः देवासुरैः । 'येषां च विरोधः शाश्वतिकः' इति नैकवद्भावः । एषां यतः कः अतः एव विरोधः न गोव्याघ्रादिवत् शाश्वतिकः इति आह    तेन मन्दराद्रिणा

व्यावर्त्तनैरहिपतेरयमाहिताङ्कः
खं व्यालिखन्निव विभाति स मन्दराद्रिः ॥३०॥
नीतोच्छ्रायं मुहुरशिशिररश्मेरुस्रैः
आनीलाभैर्विरचितपरभागा रत्नैः ।
ज्योत्स्नाशङ्कामिह वितरति हंसश्येनी
मध्येऽप्यह्नः स्फटिकरजतभित्तिच्छाया ॥३१॥

मन्थदण्डकृतेन इति भावः। अपविद्धसलिलः क्षिप्तजलः अत एव स्फुटं नागसद्म पातालं यस्मिन् सः अम्बुनिधिः अमृतममन्थि मथितः। मन्थातेः द्विकर्मकत्वात् दुहादित्वात् अप्रधाने कर्मणि लिट्। अहिपतेः मन्थगुणीकृतस्य वासुकेः इत्यर्थः। "मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिम्" इति भारतवचनात्। व्यावर्त्तनैः वेष्टनैः आहिताङ्कः कृतचिह्नः सः अयं मन्दराद्रिः खम् आकाशं व्यालिखन् व्यापाटयन् इव विभाति। अत्र औन्नत्यानुपादानेन एव खलेखनेन उत्प्रेक्षणात् अनुपात्तगुणनिमित्ता क्रियास्वरूपा उत्प्रेक्षा ॥३०॥

नीतेति। इह अद्रौ अशिशिररश्मेः उष्णांशोः उस्रैः मयूखैः सङ्क्रान्तैः इत्यर्थः। नीतोच्छ्रायम् उच्छ्रायं नीता विस्तारिता इत्यर्थः। तथा आनीलाभैः असितप्रभैः रत्नैः इन्द्रनीलैः विरचितपरभागा तत्सन्निधानात् लब्धोत्कर्षा इत्यर्थः। हंस इव श्येनी श्वेतवर्णा "विशदश्येतपाण्डुराः इत्यमरः। "वर्णादनुदात्तात्तोपधात्तो नः" इति श्येतशब्दात् ङीप्। तकारस्य च नकारः। स्फटिकानां रजतानां च भित्तयः तासां छाया कान्तिः। अह्नः मध्ये मध्याह्ने अपि इत्यर्थः मुहुः ज्योत्स्नाशङ्कां वितरति। ज्योत्स्नाकृते भ्रान्तिं जनयति इति भ्रान्तिमदलङ्कारः ॥ ३१ ॥

दधत इव विलासशालि नृत्यं
मृदु पतता पवनेन कम्पितानि ।
इह ललितविलासिनीजनभ्रू-
गतिकुटिलेषु पयःसु पङ्कजानि ॥ ३२

अस्मिन्नगृह्यत पिनाकभृता सलीलं
आबद्धवेपथुरधीरविलोचनायाः ।
विन्यस्तमङ्गलमहौषधिरीश्वरायाः
स्रस्तोरगप्रतिसरेण करेण पाणिः ॥ ३३ ॥

दधति इति । इह अद्रौ मृदु पतता मन्दं वहता पवनेन कम्पितानि पङ्कजानि ललितविलासिनीजनस्य भ्रूगतिवत् कुटिलेषु ईषत्तरङ्गितेषु इत्यर्थः पयःसु विलासशालि नृत्यं दधत इव सविलासं नृत्यन्ति इव इति उत्प्रेक्षा । पुष्पिताग्रा वृत्तम् ॥ ३२ ॥

अस्मिन्निति । अस्मिन् अद्रौ पिनाकभृता शिवेन अधीरविलोचनायाः चकितदृष्टेः उरगदर्शनात् इति भावः । ईश्वरायाः गौर्य्याः । "स्थेशभास" इत्यादिना वरच् । पुंयोगविवक्षाभावात् न ङीष् । आबद्धवेपथुः प्राप्तकम्पः इति सात्त्विकोक्तिः । "ट्वितोऽथुच्" इति अथुच्प्रत्ययः । विन्यस्ता मङ्गलमहौषधिः यवाङ्कुरादिः यस्मिन् सः पाणिः स्रस्तः गलितः उरगः एव प्रतिसरः कौतुकसूत्रं यस्य तेन । "आहुः प्रतिसरो हस्तसूत्रे माल्ये च मण्डने" इति विश्वः । करेण सलीलम् अगृह्यत इति देवस्य पार्वतीपरिग्रहनवर्णनम् । ईशायम् इत्यत्र तु अनुग्रहमात्रोक्तिः इति अपौनरुक्त्यम् । भाविकम् एव अलङ्कारः ॥ ३३ ॥

क्रामद्भिर्घनपदवीमनेकसङ्ख्यै:
तेजोभि: शुचिमणिजन्मभिर्विभिन्न:
उस्राणां व्यभिचरतीव सप्तसप्ति:
पर्य्यस्यन्निह निचय: सहस्रसङ्ख्याम् ॥ ३४ ॥

व्यधत्त यस्मिन् पुरमुच्चगोपुरं
पुरां विजेतुर्धृतये धनाधिप: ।
स एव कैलास उपान्तसर्पिण:
करोत्यकालास्तमयं विवस्वत: ॥ ३५ ॥

क्रामद्भिरिति । घनपदवीम् आकाशं क्रामद्भि: व्याप्नुवानै अनेकसंख्यै: । परःसहस्रै: इत्यर्थ: । क्वचित् "अनेकवर्णै" इति पाठस्तु प्रामादिक: एव वैयर्थ्यात् व्याघाताच्च इति । शुचिमणिभ्य: स्फटिकेभ्य: जन्म येषां तै: । "जन्माद्युत्तरपदो बहुव्रीहिर्व्यधिकरणोऽप्युच्यते" इति वामन: । तेजोभि: विभिन्न: मिश्र: अत एव पर्य्यस्यन् प्रसर्पन् इह अद्रौ सप्तसप्ति: सवितु: उस्राणां किरणानां निचय: निकर: । सहस्रम् इति संख्या सहस्रसंख्या तां स्वनियताम् इति शेष: । व्यभिचरति अतिक्रामति इति उत्प्रेक्षा ॥ ३४ ॥

व्यधत्तेति । यस्मिन् कैलासे धनाधिप: कुबेर: पुरां विजेतु: शिवस्य धृतये सन्तोषाय उच्चगोपुरम् उन्नतपुरद्वारम् । "पुरद्वारन्तु गोपुरम्" इत्यमर: । पुरम् अलकाख्यां पुरीं व्यधत्त निर्मितवान् तत्सखित्वात् इति भाव: । स: एष: कैलास: उपान्तसर्पिण: प्रान्तचारिण: विवस्वत: अकाले प्रसिद्धेतरकाले अस्तमयं करोति इव इति उत्प्रेक्षा । वस्तुतस्तु तत्कारण:

नानारत्नज्योतिषां सन्निपातैः
छन्नेष्वन्तःसानु वप्रान्तरेषु।
बद्धां बद्धां भित्तिशङ्काममुष्मिन्
आवानावान् मातरिश्वा निहन्ति॥ ३६॥
रम्या नवद्युतिरपैति न शाद्वलेभ्यः
श्यामीभवन्त्यनुदिनं नलिनीवनानि।

भावात् व्यञ्जकाप्रयोगात् गम्या उत्प्रेक्षा। सा च उपान्तवर्त्तितया असम्बन्धे सम्बन्धलक्षणातिशयोक्त्युत्थापिता इति विवेकः। अस्तम् इति मकारान्तम् अव्ययम्। तस्य पचाद्यजन्तेन अय शब्देन षष्ठीसमासः। वंशस्थं वृत्तम् उक्तम्॥ ३५॥

नानेति। अमुष्मिन् कैलासे अन्तःसानु सानुषु इत्यर्थः विभक्त्यर्थे अव्ययीभावः। नानारत्नज्योतिषां सन्निपातैः व्यतिकरैः छन्नेषु छादितेषु। "वा दान्तशान्त" इत्यादिना निपातः। वप्रान्तरेषु कटकान्तरेषु बद्धां बद्धाम् अभीक्ष्णं बद्धां दृढोत्पादितां इत्यर्थः। "नित्यवीप्सयोः" इति नित्यार्थे द्विर्भावः। "नित्यमाभीक्ष्ण्यम्" इति काशिका। एकपदं च एतत्। भित्तिशङ्कां भित्तिः इति सन्देहम् आवान् आवान् आभीक्ष्ण्येन आपतन्। आङ्पूर्वात् वाधातोः शतृप्रत्ययः। द्विर्भावादि पूर्ववत्। मातरि अन्तरिक्षे श्वयति गच्छति इति मातरिश्वा वायुः। कनिन्प्रत्ययः। तत्पुरुषे कृतिबहुलम्" इति अलुक्। निहन्ति निवर्त्तयति वायुसञ्चारात् भित्त्यभावः अवधार्य्यते इत्यर्थः। अतः निश्चयान्तः सन्देहालङ्कारः। शालिनीवृत्तम्॥ ३६॥

रम्येति। अस्मिन् अद्रौ। शादाः शष्पाणि सन्ति एषु इति शाद्वलाः तेभ्यः। "शाद्वलः शादहरिते" इत्यमरः। नडशादा

अस्मिन् विचित्रकुसुमस्तवकाचितानां
शाखाभृतां परिणमन्ति न पल्लवानि ॥३७॥
परिसरविषयेषु लीढमुक्ता
हरिततृणोद्गमशङ्कया मृगीभिः।
इह नवशुककोमला मणीनां
रविकरसंवलिताः फलन्ति भासः ॥ ३८ ॥

इत्यर्थः। रम्या नवा द्युतिः न अपैति किन्तु नित्या इत्यर्थः। नलिनीवनानि अनुदिनं सर्वदा श्यामीभवन्ति न कदाचित्पाण्डरीभवन्तिइत्यर्थः। विचित्रकुसुमस्तवकैः आचितानां व्याप्तानां शाखाभृतां तरूणां पल्लवानि न परिणमन्ति न जीर्णानि भवन्ति इत्यर्थः सर्वदा नूतनानि एव इत्यर्थः। अत्र प्रस्तुतस्य एव तद्वस्तुगतकान्तिस्थैर्य्यरूपकार्य्यवर्णनात् प्रस्तुतम् इव कारणं कश्चित् असाधारणः कैलासस्य महिमा अवगम्यते इति पर्य्यायोक्तिः अलङ्कारः। तदुक्तम्—"कारणं गम्यते यत्र प्रस्तुतात् कार्य्यवर्णनात्। प्रस्तुतत्वेन सम्बन्धस्तत्पर्य्यायोक्तमुच्यते" इति ॥ ३७ ॥

परिसरेति। इह अद्रौ परिसरविषयेषु पर्य्यन्तदेशेषु। "विषयो देशे" इति निपातः। मृगीभिः हरिततृणोद्गमशङ्कया नीलतृणाङ्कुरभ्रान्त्या इति भ्रान्तिमदलङ्कारः। लीढाः पूर्वम् आस्वादिताः पश्चात् मुक्ताः लीढमुक्ताः। दग्धप्ररूढ़ः इत्यादिवत् "पूर्वकाल" इत्यादिना समानाधिकरणसमासः। नवशुककोमलाः शुकसवर्णाः इत्यर्थः मणीनां मरकतमणीनां भासः रविकरैः संवलिताः मिश्रिताः सत्यः फलन्ति संमूर्च्छन्ति। वर्द्धन्ते इति यावत् ॥ ३८ ॥

उत्फुल्लस्थलनलिनीवनादमुष्मात्
उद्धूतः सरसिजसम्भवः परागः ।
वात्याभिर्वियति विवर्त्तितः समन्तात्
आधत्ते कनकमयातपत्रलक्ष्मीम् ॥ ३९ ॥

इह सनियमयोः सुरापगायाम्
उषसि सयावकसव्यपादरेखा ।
कथयति शिवयोः शरीरयोगं
विषमपदा पदवी विवर्त्तनेषु ॥ ४० ॥

उत्फुल्लेति । वात्याभिः वातसमूहैः "वातादिभ्यो यत्" इति यत्प्रत्ययः । अमुष्मात् उत्फुल्लस्थलनलिनीवनात् जल-पतितस्य परागस्य उत्थानासम्भवात् स्थलग्रहणम् उत्फुल्ल-सफुल्लयोः उपसंख्यानात् निष्ठालत्वम् । उद्धूतः उत्थापितः वियति समन्तात् विवर्त्तितः परिमण्डलितः । अन्तराले तु दण्डायमानः एवेति भावः । सरसिजसम्भवः पद्मोद्भवः परागः । रूढ्यभिप्रायेण अत्र सरसिजशब्दप्रयोगः द्रष्टव्यः । कनकमया-तपत्रलक्ष्मीम् आधत्ते । अत्र परागस्य आतपत्रलक्ष्मीसम्बन्धा-सम्भवात् तत्सदृशीं लक्ष्मीम् इति प्रतिबिम्बेन आक्षेपात् असम्भविधर्मसम्बन्धा इयं निदर्शना । तदुक्तम्—"असम्भवद्धर्मयोगा-दुपमानोपमेययोः । प्रतिबिम्बक्रियागम्या यत्र सा स्यान्निदर्शना ॥" इति ॥ ३९ ॥

इहेति । इह अद्रौ उषसि प्रभाते सुरापगायां लक्षणया तत्कूले सयावका सालक्तका सव्यपादस्य रेखा वामचरणमुद्रा यस्यां सा । "यावोऽलक्तो द्रुमामयः" इत्यमरः । तथा विष-माणि महदल्पानि पदानि यस्यां सा विवर्त्तनेषु प्रदक्षिण-

सम्मूर्च्छतां रजतभित्तिमयूखजालैः
आलोलपादपलतान्तरनिर्गतानाम् ।
घर्मद्युतेरिह मुहुः पटलानि धाम्नाम्
आदर्शमण्डलनिभानि समुल्लसन्ति ॥ ४१ ॥
शुक्लैर्मयूखनिचयैः परिवीतमूर्त्तिः
वप्राभिघातपरिमण्डलितोरुदेहः ।

क्रियास् पदवी शिवयोः प्रदक्षिणपद्धतिः इत्यर्थः । सनियमयोः सन्ध्यायां प्रणमतोः इत्यर्थः । शिवा च शिवश्च तयोः शिवयोः उमाशङ्करयोः । "पुमान् स्त्रिया" इति एकशेषः । शरीरयोगस मुद्राङ्कसङ्घटनारूपं कथयति । सनियमयोः इति नियमविधये ऽपि विरचामहे इह विहरतः शिवौ इति भावः । अत्र पदवीविशेषणपदार्थयोः कथनं प्रति हेतुत्वात् काव्यलिङ्गमलङ्कारः ॥ ४० ॥

सम्मूर्च्छतामिति । इह अद्रौ रजतभित्तिमयूखजालैः सम्मूर्च्छता बहलीभवताम् आलोलानां पादपलतानां तरुशाखानाम् अन्तरेषु रन्ध्रेषु निर्गतानां प्रसृतानां घर्मद्युतेः उष्णांशोः धाम्नां तेजसां आदर्शमण्डलनिभानि दर्पणबिम्बसदृशानि इति उपमालङ्कारः । पटलानि मण्डलानि मुहुः वारंवारं समुल्लसन्ति पुनः पुनः स्फुरन्ति न तु सातत्येन लतानाम् आलोलत्वाभावात् । अत्र नान्यमृत्पाषाणादिप्रायाणां सम्भवति इति भावः ॥४१॥

शुक्लैरिति । शुक्लैः मयूखनिचयैः शुभ्रकिरणसमूहैः परिवीतमूर्त्तिः व्याप्तदेहः । वप्राभिघातेन वप्रक्रीडया परिमण्डलितः वर्तुलीकृतः उरुदेहः बृहच्छरीरः यस्य तथोक्तः गणभर्तुः प्रमथनाथस्य उक्षा वृषभः । "उक्षा भद्रो बलीवर्द ऋषभो-

शृङ्गाण्यमुष्य भजते गणभर्त्तुरुक्षा
कुर्वन् वधूजनमनःसु शशाङ्कशङ्काम् ॥४२॥

सम्प्रति लब्धजन्म शनकैः कथमपि लघुनि
क्षीणपयस्युपेयुषि भिदां जलधरपटले।
खण्डितविग्रहं बलभिदो धनुरिह विविधाः
पूरयितुं भवन्ति विभवः शिखरमणिरुचः॥४३॥

स्नपितनवलतातरुप्रवालैः
अमृतलवस्रुतिशालिभिर्मयूखैः।

वृषभो वृषः” इत्यमरः। वधूजनमनःसु शशाङ्कशङ्कां चन्द्रभ्रान्तिं कुर्वन् तेषां मौग्ध्यात् इति भावः। अमुष्य अद्रेः शृङ्गाणि भजते सेवते। अत्र शङ्काशब्दस्य सन्देहार्थत्वे सन्देहालङ्कारः। भ्रान्तिपरत्वे भ्रान्तिमदलङ्कारः। यथा इच्छसि तथा अस्तु। स च उक्षाविशेषणोत्थेन काव्यलिङ्गेन अङ्गाङ्गिभावेन सङ्कीर्य्यते ॥ ४२ ॥

सम्प्रतीति। इह अद्रौ विविधाः नानावर्णाः शिखरमणिरुचः सम्प्रति शरदि इत्यर्थः। लघुनि अगुरुणि कुतः क्षीणपयसि अत एव भिदां भेदम्। “षिद्भिदादिभ्योऽङ्” इति अङ् प्रत्ययः। उपेयुषि गते जलधरपटले मेघमण्डले कथम् अपि शनकैः लब्धजन्म उत्पन्नम् इत्यर्थः। अत एव खण्डितविग्रहं छिन्नस्वरूपं बलभिदः इन्द्रस्य धनुः पूरयितुं विभवः समर्थाः भवन्ति। अत्र इन्द्रधनुषः मणिरुचोनाम् असम्बन्धे सम्बन्धकथनात् अतिशयोक्तिः अलङ्कारः। वंशपत्रपतितं वृत्तम्। “दिङ्मुनिवंशपत्रपतितं भरनभनलगैः” इति लक्षणात् ॥ ४३ ॥

सततमसितयामिनीषु शम्भोः
अमलयतीह वनान्तमिन्दुलेखा ॥ ४४ ॥

क्षिपति योऽनुवनं विततां बृहद्-
बृहतिकामिव रौचनिकीं रुचम्।
अयमनेकहिरण्मयकन्दरः
तव पितुर्दयितो जगतीधरः ॥ ४५ ॥

सक्तिं जवादपनयत्यनिले लतानां
वैरोचनैर्द्विगुणिताः सहसा मयूखैः।

स्नपितेति। इह अद्रौ शम्भोः इन्दुलेखा स्नपितानि नवानि लतानां तरूणां च प्रवालानि यैः तैः। अमृतलवस्रुत्या अमृतबिन्दुनिःस्यन्देन शालन्ते ये तैः मयूखैः सततं सर्वकालम् असितयामिनीषु कृष्णपक्षरात्रिषु अपि वनान्तम् अमलयति धवलयति। अन्यत्र न एतदस्ति इति व्यतिरेकः व्यज्यते ॥४४॥

क्षिपतीति। अथ यः अद्रिः अनुवनं विततां रौचनिकीं रुचं सौवर्णीमित्यर्थः। रोचनया रक्तां रौचनिकीम्। "लाक्षारोचनशकलकर्दमाट्ठक्" इति ठक्। "टिड्ढाणञ्" इत्यादिना ङीप्। उत्प्रेक्षते। बृहद्बृहतिकां महोत्तरासङ्गम् इव। "द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा" इत्यमरः। क्षिपति प्रसारयति। अनेकाः हिरण्मय्यः कन्दराः यस्य सः। हिरण्मयशब्दः "दाण्डिनायन" इत्यादिना निपातनात् साधुः। अयं पुरोवर्त्ती गिरिः इत्यर्थः। तव पितुः इन्द्रस्य दयितः प्रियः जगत्याः धरः जगतीधरः। यः तं गन्तव्यः इन्द्रकीलाख्यः इत्यर्थः ॥ ४५ ॥

सक्तिमिति। अमुत्र अमुष्मिन् अद्रौ अनिले जवात् झटिति

रोधोभुवां मुहुरमुत्र हिरण्मयीनां
भासस्तडिद्विलसितानि विडम्बयन्ति ॥४६॥

कषणकम्पनिरस्तमहाहिभिः
क्षणविमत्तमतङ्गजवर्जितैः।
इह मदस्नपितैरनुमीयते
सुरगजस्य गतं हरिचन्दनैः ॥ ४७ ॥

जलदजालघनैरसिताश्मनाम्
उपहतप्रचयेह मरीचिभिः।

[illegible]नानां मिलितम् अन्योऽन्यसङ्गम् अपनयति सति सहसा ह[illegible] [illegible]गच्छद्भिः मारुतैः मयूखैः द्विगुणिताः द्विराहताः कृता इति द्विगुणिताः। "गुणस्त्वावृत्तिशब्दादिष्विन्द्रियामुख्यतन्तुषु" इति वैजयन्ती। हिरण्मयीनां हिरण्यविकाराणाम्। "दाण्डिनायन" इत्यादिना निपातनात् साधुः। रोधोभुवां तटभुवां भासः मुहुः तडिद्विलसितानि विडम्बयन्ति अनुकुर्वन्ति इत्यर्थः। उपमालङ्कारः ॥ ४६ ॥

कषणेति। इह अद्रौ कषणेन कण्डूयनेन यः कम्पः तेन निरस्ताः महाहयः महासर्पाः येभ्यः तैः। क्षणं विमत्तमतङ्गजवर्जितैः मत्तमतङ्गजरहितैः कुतः मदस्नपितैः ऐरावतमदसिक्तैः इत्यर्थः। "मितां ह्रस्वः" इति ह्रस्वः। हरिचन्दनैः चन्दनद्रुमैः सुरगजस्य ऐरावतस्य गतं प्राप्तिः अनुमीयते। हरिचन्दनविशेषणैः काव्यलिङ्गम् उन्नेयम् ॥ ४७ ॥

जलदेति। इह अस्मिन् अद्रौ जलदजालघनैः मेघसान्द्रैः असिताश्मनाम् इन्द्रनीलानां मरीचिभिः दीधितिभिः। "भानु

भवति दीप्तिरदीपितकन्दरा
तिमिरसंवलितेव विवस्वतः ॥ ४८ ॥

भव्यो भवन्नपि मुनेरिह शासनेन
क्षात्रे स्थितः पथि तपस्य हतप्रमादः।
प्रायेण सत्यपि हितार्थकरे विधौ हि
श्रेयांसि लब्धुमसुखानि विनाऽन्तरायैः ॥४९॥

मा भूव न्नपथहरास्तवेन्द्रियाश्वाः

[illegible] मरीचिः "स्त्रीपुंसयोर्दीधितिः स्त्रियाम्" इत्यमरः। उप-[illegible] विच्छिन्नसङ्घाता अत एव अदीपितकन्दरा अप्रका-[illegible] विवस्वतः दीप्तिः तिमिरैः संवलिता व्यामिश्रिता [illegible] भवति इति उत्प्रेक्षा ॥ ४८ ॥

[illegible] इति। इह अद्रौ भव्यः शान्तः भवन् अपि मुने-[illegible] शासनेन इन्द्राराधनरूपेण क्षात्रे पथि क्षत्रियमार्गे स्थितः [illegible] एव इत्यर्थः। हतप्रमादः अप्रमत्तः सन् तपस्य तपश्चर्यां कुरु। तपस्य इति "कर्मणो रोमन्थतपोभ्यां [illegible]चरोः" इति क्यङ्। तदन्तात् धातोः लोट्। न च सर्व-[illegible]हितकारिणः मे प्रमादः किं करिष्यति इति विश्वसितव्यम् इति अर्थान्तरन्यासेन आह प्रायेणेति। हि यस्मात् प्रायेण [illegible]। "प्रायो वयस्यनशने मृतौ बाहुल्यतुल्ययोः इति हेमचन्द्रः। हितम् अर्थं करोति इति तस्मिन् विधौ व्यापारे [illegible] अन्तरायैः विना श्रेयांसि लब्धुम् असुखानि अशक्यानि इत्यर्थः। अत एव "शकधृष" इत्यादिना [illegible]कर्तृकेषु तुमुन्। [illegible] सर्वत्र सर्वस्य अपि [illegible] इति भावः ॥ ४९ ॥

अकृतमकृशलक्ष्मीश्चेतसा शंसितं सः
स्वमिव पुरुषकारं शैलमभ्याससाद ॥ ५२ ॥

इति श्रीमहामहोपाध्यायभारविकृतौ किराता-
र्जुनीये महाकाव्ये हिमवद्वर्णनं नाम
पञ्चमः सर्गः ॥ ५ ॥

लक्ष्मीः इति बहुवचनाश्रितः बहुव्रीहिः । एवं च "उरःप्रभृतिभ्यश्च" इति कप्प्रत्ययानवकाशः तत्र लक्ष्मीशब्दस्य एकवचनान्तपाठात् । नापि "नद्यृतश्च" इत्यस्य अवकाशः उरःप्रभृति पाठसामर्थ्यात् एव । शैषिकः तु वैभाषिकः इति अविरोधः । सः अर्जुनः सर्वत्र सारयोगात् उत्कृष्टबलप्रयोगात् । "सारो बले स्थिरांशे च नाय्ये क्लीवे वरे त्रिषु" इति उभयत्र अपि अमरः । अनतिशयनीयम् अनतिक्रमणीयम् अनेकेन बहुना अङ्गभाजा समीपं गतेन शीघ्रभाविना इति यावत् । फलेन कार्य्यसिद्ध्या अविरहितम् अशून्यं कार्य्यसिद्धं अवश्यं साधकम् इत्यर्थः । अकृशम् अतनु चेतसा आशंसितं प्राप्तुम् इष्टं शैलम् इन्द्रकीलं सः आत्मीयं पुरुषस्य कारः कर्म तं पुरुषकारम् उक्तविशेषणविशिष्टं पौरुषम् इव अभ्याससाद अधिष्ठितवान् । मालिनीवृत्तम् ॥ ५२ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
किरातार्जुनीयव्याख्यायां घण्टापथसमाख्यायां
पञ्चमः सर्गः

## षष्ठः सर्गः ।

—※—

रुचिराकृतिः कनकसानुमथो
परमः पुमानिव पतिं पतताम् ।
धृतसत्पथस्त्रिपथगामभितः
स तमारुरोह पुरुहूतसुतः ॥ १ ॥

तमनिन्द्यवन्दिन इवेन्द्रसुतं
विहितालिनिक्वणजयध्वनयः ।

रुचिराकृतिरिति । अथ आसदनानन्तरं रुचिराकृतिः सौम्यविग्रहः । धृतसत्पथः अवलम्बितसन्मार्गः आकारानुरूपगुणवान् इत्यर्थः । "यत्राकृतिस्तत्र गुणा वसन्ति" इति सामुद्रिकाः । उपमाने अपि समानम् एतत् । सः पुरुहूतसुतः अर्जुनः कनकस्य विकाराः सानवः यस्य तं कनकसानुम् । गरुडसावर्ण्यार्थं विशेषणम् एतत् । "समुदायविकारषष्ठ्याश्च" इति बहुव्रीहिः उत्तरपदलोपश्च । तम् इन्द्रकीलं परमः पुमान् विष्णुः पतता पक्षिणां पतिं गरुडम् इव । त्रिभिः पथिभिः गच्छति इति त्रिपथगा भागीरथी । "अन्येष्वपि दृश्यते" इति डप्रत्ययः उपपदसमासश्च । ताम् अभितः अभिमुखम् आरुरोह । "समीपोभयतःशीघ्रसाकल्याभिमुखेऽभितः" इत्यमरः । प्रमिताक्षरावृत्तम् । "प्रमिताक्षरा । सजससैरुदिता" इति लक्षणात् ॥ १ ॥

अथ अस्य कार्य्यसिद्धिनिमित्तानि सूचयन् मार्गं वर्णयति । तमिति । विहिताः अलिनिक्वणाः जयध्वनयः इव यैः ते तथोक्ताः । पवनेरिताः पवनेन वायुना नुन्नाः अत एव आकुलाः

पवनेरिताकुलविजिह्मशिखा
जगतीरुहोऽवचकरुः कुसुमैः॥ २॥
अवधूतपङ्कजपरागकणा-
स्तनुजाह्नवीसलिलवीचिभिदः।
परिरेभिरेऽभिमुखमेत्य सुखाः
सुहृदः सखायमिव तं मरुतः॥ ३॥

लोलाः विजिह्माः वक्राश्च शिखाः अग्राणि येषां ते तथोक्ताः। "शिखा ज्वाला केकिमाल्योः शिखाशाखाग्रमौलिषु" इति वैजयन्ती। जगतीरुहः भूरुहः। क्विप्। अनिन्द्याः अनवद्याः ये वन्दिनः स्तुतिपाठकाः ते इव तम् इन्द्रसुतम् अर्जुनं कुसुमैः अवचकरुः अभिववृषुः इत्यर्थः। "ऋच्छत्यृताम्" इति गुणः। अत्र किरतेः वृष्ट्यर्थत्वात् कुसुमानां करणत्वं विक्षेपार्थत्वे तु कर्मत्वम् एव। यथा "कटाक्षान् वामा किरति" इति दृश्यते च धातूनाम् अर्थभेदात् कारकव्यत्ययः। यथा सिञ्चतेः क्षरणार्द्रीकरणयोः अर्थयोः द्रवद्रव्यस्य कर्मत्वकरणत्वे। यथा "मेघोऽमृतं सिञ्चति" "गौः पयश्च सिञ्चति" "मेघा अमृतैर्ववृषुः" इति। अत्र वाक्ये समासगतयोः उपमयोः साध्यसाधनभावात् अङ्गाङ्गिभावेन सङ्करः॥ २॥

अवधूतेति। अवधूताः प्रसारिताः पङ्कजपरागकणाः यैः ते तथोक्ताः इति सौरभ्योक्तिः। तनूः जाह्नव्याः सलिलवीचीः भिन्दन्ति इति तथोक्ताः इति शैत्योक्तिः। सुखयन्ति इति सुखाः सुखस्पर्शाः इति मान्द्योक्तिः। पचाद्यच्। मरुतः वाताः तम् अर्जुनं सुहृदः सखायम् इव अभिमुखम् एत्य आगत्य परिरेभिरे आलिङ्गितवन्तः॥ ३॥

उदितोपलस्खलनसंवलिताः
स्फुटहंससारसविरावयुजः।
मुदमस्य माङ्गलिकतूर्य्यकृतां
ध्वनयः प्रतेनुरनुवप्रमपाम्॥ ४॥

अवरुग्णतुङ्गसुरदारुतरौ
निचये पुरः सुरसरित्पयसाम्।
स ददर्श वेतसवनाचरितां
प्रणतिं बलीयसि समृद्धिकरीम्॥ ५॥

उदितेति। उदितोपलेषु उन्नतपाषाणेषु स्खलनेन प्रतिघातेन संवलिताः चूर्णिताः अतः तूर्य्यघोषः इव धुमधुमायमाना इत्यर्थः। स्फुटैः हंसानां सारसानां च विरावैः युज्यन्ते इति तथोक्ताः। क्विप्। अनुवप्रम् अपाम् अन्तः पतन्तीनाम् इति शेषः। ध्वनयः अस्य अर्जुनस्य मङ्गलं प्रयोजनम् एषां ते माङ्गलिकाः। "प्रयोजनम्" इति ठञ्। तैः तूर्य्यैः कृतां मुदं हर्षं प्रतेनुः। अत्र अन्यस्य अन्यकार्य्यकरणासम्भवात् तूर्य्यकृतमुत्सदृशीं मुदम् इति प्रतिबिम्बेन आक्षेपात् निदर्शनालङ्कारः॥४॥

अरुग्णेति। सः अर्जुनः पुरः अग्रे अवरुग्णतुङ्गसुरदारुतरौ भग्नोन्नतदेवदारुद्रुमे बलीयसि बलवत्तरे। मत्वन्तात् ईयसुनि "विन्मतोर्लुक्" इति मतोः लुक्। सुरसरित्पयसां निचये पूरविषये वेतसवनेन वानीरवनेन आचरिताम्। "अथ वेतसे रथाभ्रपुष्पविदुलशीतवानीरवञ्जुला" इत्यमरः। समृद्धिकरीं श्रेयस्करीं लोके यथा दृष्टाम् इत्यर्थः। प्रणतिं ददर्श। या सर्वलोकदृष्टान्तभूता इति भावः॥ ५॥

प्रबभूव नालमवलोकयितुं
परितः सरोजरजसाऽरुणितम् ।
सरिदुत्तरीयमिव संहतिमत्
स तरङ्गभङ्गि कलहंसकुलम् ॥ ६ ॥
दधति क्षतीः परिणतद्विरदे
मुदितालियोषिति मदस्रुतिभिः ।
अधिकां स रोधसि बबन्ध धृतिं
महते रुजन्नपि गुणाय महान् ॥ ७ ॥
अनुहेमवप्रमरुणैः समतां

प्रबभूवेति । सः अर्जुनः परितः सरोजरजसा कमलरेणुनः अरुणितं पाटलितम् उत्तरीयं च कुसुमादिना अरुणितं संहतिमत् नीरन्ध्रं तरङ्गभङ्गि वारितरङ्गशोभि सरितः उत्तरीयं स्तनांशुकम् इव स्थितं कलहंसकुलं कादम्बकुलम् अवलोकयितुम् अलम् अत्यर्थं न प्रबभूव न शशाक तत्सौन्दर्यातिशयित्वात् इति भावः ॥ ६ ॥

दधतीति । सः अर्जुनः क्षतीः क्षतानि दधति धारयति । कुतः परिणताः तिर्य्यग्दन्तप्रहारिणः द्विरदाः यस्मिन् तस्मिन् । "तिर्य्यग्दन्तप्रहारस्तु गजः परिणतो मतः" इति हलायुधः । मदस्रुतिभिः मुदितालियोषिति रोधसि अधिकां धृतिं प्रीतिं बबन्ध निश्चलीकृतवान् इत्यर्थः । तथाहि । महान् जनः रुजन् पीड़यन् अपि महते गुणाय उत्कर्षाय भवति महत्कृता पीड़ा अपि शुभावहा एव इत्यर्थः । तत् युक्तं गजरुग्णस्य अपि रोधसः प्रीतिकरत्वम् इति भावः ॥ ७ ॥

गतमूर्मिभिः सहचरं पृथुभिः ।
स रथाङ्गनामवनितां करुणैः
अनुबध्नतीमभिननन्द रुतैः ॥ ८ ॥

सितवाजिने निजगदूरुचयः
चलवीचिरागरचनापटवः ।
मणिजालमम्भसि निमग्नमपि
स्फुरितं मनोगतमिवाकृतयः ॥ ९ ॥

अन्विति । सः अर्जुनः अनुहेमवप्रं कनकसानुसमीपे । समीपार्थे अव्ययीभावः । अरुणैः । कनककान्त्युपरञ्जनात् इति इति भावः । पृथुभिः ऊर्मिभिः समतां तुल्यरूपतां गतम् । सादृश्यात् दुर्लक्ष्यम् इति भावः । सहभूतं सहचरं प्रियं सहशब्दस्य पचाद्यजन्तेन चरशब्देन समासः । करुणैः दीनैः रुतैः कूजितैः अनुबध्नतीम् अन्विष्यन्तीं रथाङ्गनामवनितां चक्रवाकीम् अभिननन्द प्रकृष्टप्रेमदर्शनात् कस्य न आनन्दः इति भावः । अत्र तावत् ऊर्मीणां स्वधावल्यत्यागेन आरुण्य-स्वीकारात् तद्गुणालङ्कारः । "तद्गुणः स्वगुणत्यागादन्योत्-कृष्टगुणाश्रयात् इति लक्षणात् । तन्मूला च इयं चक्रवाक्याः स्वकान्ते तरङ्गभ्रान्तिः इति तद्गुणभ्रान्तिमतोः अङ्गाङ्गिभावेन सङ्करः ॥ ८ ॥

सितवाजिन इति चलवीचीनां रागः रञ्जनं वर्णान्तरा-पादनं तस्य रचना क्रिया तत्र पटवः [illegible] रुचयः प्रभाः अम्भसि निमग्नम् अपि मणिजाल[illegible] अभूनम् इति भावः । मनोगतं स्फुरितं रोषादि प्रकार[illegible] तथा भ्रूभङ्गादिवाह्य-विकाराः इव सितवाजिने अर्जुनाय नि[illegible]गूढं ज्ञापयामासुः

उपलाहतोद्धततरङ्गधृतं
जविना विधूतविततं मरुता ।
स ददर्श केतकशिखाविशदं
सरितः प्रहासमिव फेनमपाम् ॥ १० ॥

बहुबर्हिचन्द्रकनिभं विदधे
धृतिमस्य दानपयसां पटलम् ।
अवगाढमीक्षितुमिवेभपतिं
विकसद्विलोचनशतं सरितः ॥ ११ ॥

प्रतिबोधजृम्भणविभिन्नमुखी
पुलिने सरोरुहदृशा ददृशे ।

इत्यर्थः । आकृत्या हि मनोगतं विचक्षणाः जानन्ति इति भावः ॥ ९ ॥

उपलेति । उपलैः आहताः अत एव उद्धताश्च ये तरङ्गाः तैः धृतं निर्गमरोधात् इत्यर्थः । जविना वेगवता मरुता वातेन विधूतं विततं च केतकस्य शिखा तद्वत् विशदम् अपां फेनं डिण्डीरम् । "डिण्डीरोऽब्धिकफः फेनः" इत्यमरः । सरितः प्रहासम् अट्टहासम् इव इति उत्प्रेक्षा । सः अर्जुनः ददर्श ॥१०॥

बह्विति । बर्हिचन्द्रकनिभं मयूरमेचकसदृशम् । "समौ चन्द्रकमेचकौ" इत्यमरः । बहु अनेकधा दानपयसां पटलम् । जातौ एकवचनम् । बहवः मदाम्बुबिन्दवः इत्यर्थः । अवगाढम् अन्तःप्रविष्टम् । गाहेः कर्त्तरि क्तः । इभपतिम् ईक्षितुं विकसत् उन्मिषत् सरितः विलोचनशतम् इव इति उत्प्रेक्षा । अस्य अर्जुनस्य धृतिं प्रीतिं विदधे ॥ ११ ॥

पतदच्छमौक्तिकमणिप्रकरा
गलदश्रुविन्दुरिव शुक्तिवधूः ॥ १२ ॥
शुचिरप्सु विद्रुमलताविटपः
तनुसान्द्रफेनलवसंवलितः ।
स्मरदायिनः स्मरयति स्म भृशं
दयिताधरस्य दशनांशुभृतः ॥ १३ ॥
उपलभ्य चञ्चलतरङ्गधृतं

प्रतिबोधेति। प्रतिबोधः स्फुटनं निद्रापगमश्च तत्र दन् जृम्भणम् उच्छूनता जृम्भा च तेन विभिन्नमुखी विश्लिष्टाग्रा विवृताम्या च अत एव पतन् प्रसरन् अच्छः मौक्तिकमणीनां प्रकरः स्तोमः यस्याः सा तथोक्ता अत एव गलदश्रुविन्दुः इव स्थिता इति उत्प्रेक्षा। शुक्तिः वधूः इव पुलिने शयनीये इव इति भावः। सरोरुहदृशा अर्जुनेन ददृशे दृष्टा। अत्र प्रतिबोधादि विशिष्टपदोपात्तानां प्रकृतानां शुक्तिवध्वोश्च उपमारूपकयोः साधकबाधकाभावात् सन्देहालङ्कारः तत्सापेक्षा च अश्रुगलनोत्प्रेक्षा इति तयोः अङ्गाङ्गिभावः ॥ १२ ॥

शुचिरिति। अप्सु शुचिः स्वच्छः तनुना सान्द्रेण च फेनस्य लवेन शकलेन संवलितः सङ्गतः विद्रुमलतायाः विटपः पल्लवः। "विटपः पल्लवे षिङ्गे विस्तारे स्तम्बशाखयोः" इति विश्वः। स्मरदायिनः कामोद्दीपकस्य दशनांशुभृतः दन्तकान्तिकलितस्य इत्यर्थः। दयिताधरस्य। "अधीगर्थ" इत्यादिना षष्ठी। भृशं स्मरयति स्म। "लट्स्मे" इति भूतार्थे लट्। "मितां ह्रस्वः" इति ह्रस्वः। स्मरणालङ्कारः ॥ १३ ॥

मदगन्धमुत्थितवतां पयसः।
प्रतिदन्तिनामिव स सम्बुबुधे
करियादसामभिमुखान् करिणः॥ १४॥
स जगाम विस्मयमुदीक्ष्य पुरः
सहसा समुत्पिपतिषोः फणिनः।
प्रहितं दिवि प्रजविभिः श्वसितैः
शरदभ्रविभ्रममपां पटलम्॥ १५॥
स ततार सैकतवतीरभितः
शफरीपरिस्फुरितचारुदृशः।

उपलभ्येति। सः अर्जुनः चञ्चलतरङ्गैः धृतं तत्संक्रान्तम् इत्यर्थः। मदगन्धम् उपलभ्य आघ्राय पयसः उत्थितवतां रोषात् इति शेषः। करिणां यादसाम्। शाकपार्थिवादिषु द्रष्टव्यः। प्रतिदन्तिनाम् इव अभिमुखान् अभियातान् इत्यर्थः। करिणः संबुबुधे ददर्श इत्यर्थः॥ १४॥

स इति। सः अर्जुनः पुरः अग्रे सहसा समुत्पिपतिषोः समुत्पतितुमिच्छोः। पतेः सन्नन्तात् उप्रत्ययः "तनिपतिदरिद्रादिभ्यः सन इड्वा वक्तव्यः" इति विकल्पात् इडागमः। फणिनः प्रजविभिः अतिवेगवद्भिः श्वसितैः फूत्कारैः दिवि आकाशे प्रहितं प्रेरितं शरदभ्रस्य विभ्रमः इव विभ्रमः सौन्दर्य्यं यस्य तत् शुभ्रम् अभ्रव्यापकं च इत्यर्थः। अपां पटलं पुरः उदीक्ष्य विस्मयं जगाम। अत्र उपमानुप्राणिता स्वभावोक्तिः अलङ्कारः॥ १५॥

स इति। सः अर्जुनः सैकतवतीः पुलिनवतीः अभितः

ललिताः सखीरिव बृहज्जघनाः
सुरनिम्नगामुपयतीः सरितः ॥१६॥
अधिरुह्य पुष्पभरनम्रशिखैः
परितः परिष्कृततलां तरुभिः।
मनसः प्रसत्तिमिव मूर्ध्नि गिरेः
शुचिमाससाद स वनान्तभुवम् ॥१७॥
अनुसानु पुष्पितलताविततिः
फलितोरुभूरुहविविक्तवनः।

सफरीणां प्रोष्ठीनां परिस्फुरितानि एव चारवः दृशः यासां ता। सुरनिम्नगां गङ्गाम् उपयतीः भजन्तीः। इणः शतृ उगितत्वात् ङीप्। अत एव बृहज्जघनाः ललिताः सख्य इव स्थिताः सरितः ततार अभिचक्राम ॥१६॥

अधिरुह्येति। सः अर्जुनः अधिरुह्य अर्थात् गिरिम् इति शेषः। पुष्पभरेण नम्रशिखैः नताग्रैः तरुभिः परितः परिष्कृततलां भूषितस्वरूपाम्। "अधःस्वरूपयोरस्त्री तलम्" इत्यमरः। "संपर्युपेभ्यः करोतौ भूषणे" इति सुडागमः। शुचिं शुद्धाम् अत एव मनसः प्रसत्तिम् इव मूर्त्तं मनःप्रसादम् इव स्थिताम् इत्युत्प्रेक्षा। गिरेः मूर्ध्नि वनान्तभुवम् आससाद। अन्तःशब्दः स्वरूपवचनः। "अन्तोऽध्यवसिते मृत्यौ स्वरूपे निश्चयेऽन्तिके" इति वैजयन्ती ॥१७॥

अनुसान्विति। अनुसानु प्रतिसानु। वीप्सार्थे अव्ययीभावः। पुष्पिताः सञ्जातपुष्पाः लताविततयः यस्मिन् सः फलिताः उरुभूरुहाः येषु तानि विविक्तानि विजनानि पूतानि

धृतिमाततान तनयस्य हरेः
तपसेऽधिवस्तुमचलामचलः ॥१८॥

प्रणिधाय तत्र विधिनाथ धियं
दधतः पुरातनमुनेर्मुनिताम्।
श्रममादधावसुकरं न तपः
किमिवावसादकरमात्मवताम् ॥१९॥

शमयन् धृतेन्द्रियशमैकसुखः
शुचिभिर्गुणैरघमयं स तमः।

वा वनानि यस्मिन् सः तथोक्तः। "विविक्तौ पूतविजनौ" इत्य मरः। अचलः इन्द्रकीलः हरेः तनयस्य अर्जुनस्य तपसे तपश्चर्यार्थम् अधिवस्तुम् अधिष्ठातुम्। क्रियापेक्षया समान-कर्तृकत्वात् तुमुन्। अचलां धृतिम् उत्साहम् आततान। अत्र अचलविशेषणपदार्थस्य धृतिकारणहेतुत्वात् काव्यलिङ्गम् अलङ्कारः ॥१८॥

प्रणिधायेति। अथ तत्र अद्रौ विधिना योगशास्त्रानुसारेण धियं चित्तवृत्तिं प्रणिधाय ध्येयविषये धियं नियम्य। "निगूढ" इत्यादिना णत्वम्। मुनितां दधतः तपस्यतः इत्यर्थः। पुरातनमुनेः अर्जुनस्य इत्यर्थः। असुकरं दुष्करं तपः श्रमं खेदं न आदधौ न चकार। तथाहि आत्मवतां मनस्विनाम् अव-सादकरम् अशान्तिजनकं किम् इव। न किञ्चित् इत्यर्थः। इवशब्दो वाक्यालङ्कारे ॥१९॥

शमयन्निति। धृतम् इन्द्रियशमः विषयव्यावृत्तिः एव एक-मुख्यं सुखम् आह्लादः येन तथोक्तः आत्मारामः इत्यर्थः। अन्यत्र

प्रतिवासरं सुकृतिभिर्ववृधे
विमलः कलाभिरिव शीतरुचिः ॥२०॥
अधरीचकार च विवेकगुणात्
अगुणेषु तस्य धियमस्तवतः ।
प्रतिघातिनीं विषयसङ्गरतिं
निरुपप्लवः शमसुखानुभवः ॥२१॥
मनसा जपैः प्रणतिभिः प्रयतः

छतं कृतम् इन्द्रियग्रामः सन्तापनिवर्त्तनम् एकम् अद्वितीय सुखम् आह्लादश्च येन सः तथोक्तः । शुचिभिः निर्मलैः गुणैः मैत्र्यादिभिः अन्यत्र कान्त्यादिभिः अघमयं पापरूपं तम अज्ञानम् अन्यच्च अन्धकारं च शमयन् निवर्त्तयन् । विमलः अमलिनः पापरहितः शुभ्रः अन्यच्च सः अर्जुनः प्रतिवासरं सुकृतिभिः सुकृतैः तपोभिः इत्यर्थः । स्त्रियां क्तिन् । कलाभिः शीतरुचिः चन्द्रः इव ववृधे ॥२०॥

अधरीचकारेति । किं च इति चार्थः । विवेकः तत्त्वावधारणं सः एव गुणः तस्मात् तेन हेतुना इत्यर्थः । "विभाषा गुणेऽस्त्रियाम्" इति पञ्चमी । अगुणेषु कामक्रोधादिदोषेषु विषये । तद्विरोधिना नञ् समासः । धियं चित्तवृत्तिम् अस्तवतः निवारितवतः तस्य अर्जुनस्य निरुपप्लवः निर्बाधः शमसुखानुभवः शान्त्यानन्दानुभवः प्रतिघातिनीं सोपप्लवां विषयसङ्गरतिं शब्दाद्युपभोगरुचिम् अधरीचकार तिरस्कृतां चकार इत्यर्थः । उत्कृष्टसुखलाभस्य अपकृष्टवैराग्यहेतुत्वात् इति भावः ॥२१॥

समुपेयिवानधिपतिं स दिवः ।
सहजेतरौ जयशमौ दधतौ
बिभराम्बभूव युगपत् महसौ ॥२२॥
शिरसा हरिन्मणिनिभः स वहन्
कृतजन्मनोऽभिषवणेन जटाः ।
उपमां ययावरुणदीधितिभिः
परिमृष्टमूर्द्धनि तमालतरोः ॥२३॥
धृतहेतिरप्यधृतजिह्ममतिः

मननेति । प्रयतः अहिंसादिनिरतः मनसा ध्यानेन जपैः विशिष्टमन्त्राभ्यासैः प्रणतिभिः नमस्कारैः एवं मनोवाक्काय-कर्मभिः दिवः अधिपतिम् इन्द्रं समुपेयिवान् उपसेदिवान् सः अर्जुनः सहजेतरौ नैसर्गिकागन्तुकौ जीयते अनेन इति जयः वीररसः । "एरच्" इति अच् । शम्यते अनेन इति शमः जयशमौ वीरशान्तिरसौ दधतौ पुष्णतौ महसौ तेजसी युगपत् बिभराम्बभूव बभार । "भीह्रीभृहुवाम्" इति विकल्पात् आम्प्रत्ययः । अत्र युगपत् वीरशान्ताधिकरणत्वाभिधानात् अस्य लोकातिगमहिमत्वं व्यज्यते ॥२२॥

शिरसेति । हरिन्मणिनिभः मरकतमणिश्यामः अभिषवणेन स्नानेन कृतजन्मनः जनिताः अतः पिशङ्गीः इति भावः । जटाः शिरसा वहन् सः अर्जुनः अरुणस्य अनरोः दीधितिभिः परिमृष्टमूर्धनि व्याप्तशिरसि तमालतरौ उपमां तमालतरोः सादृश्यं ययौ इति आर्थी इयम् उपमा । तरोः औपम्याधिकरणत्वात् तदपेक्षया सप्तमी ॥२३॥

चरितैर्मुनीनधरयन् शुचिभिः ।
रजयाञ्चकार विरजाः स मृगान्
कमिवेशते रमयितुं न गुणाः ? ॥ २४ ॥

अनुकूलपातिनमचण्डगतिं
किरता सुगन्धिमभितः पवनम्
अवधीरितार्त्तवगुणं सुखतां
नयता रुचां निचयमंशुमतः ॥ २५ ॥

छतेति । छतहेतिः छतायुधः अपि अछता जिह्ममतिः कुटिलमतिः येन सः शुचिभिः चरितैः मुनीन् अधरयन् तिरस्कुर्वन् । वेषण एव भीषणः न तु कर्म्मणा इति भावः । कुतः विरजाः रजोगुणरहितः सः अर्जुनः मृगान् रजयाञ्चकार रमयामास । "रञ्जर्णौ मृगरमणे नलोपो वक्तव्य." इति नलोपः । तथाहि । गुणाः दयादयः कम् इव रमयितुं न ईशते कं वा वशीकर्त्तुं न शक्नुवन्ति इति भावः । शुद्धिः एव हि परं विश्वामबीजं परस्य न वेष. न अपि संस्तवः इति भावः ॥ २४ ॥

अथ अस्य त्रिभिः तपःसिद्धिम् आह । अनुकूलेत्यादिना । अनुकूलपातिनं न तु प्रतिकूलपातिनम् अचण्डगतिं मन्दगामिनं सुगन्धिम् । गन्धस्येत्वे तदेकान्तग्रहणं अपि कवीनां निरङ्कुशत्वात् समासान्तः । अथवा केचित् आगन्तुकत्वे अपि एकवचनेन समासान्तम् इच्छन्ति । पवनम् अभितः किरता प्रवर्त्तयता इत्यर्थः । ऋतुः अस्य प्राप्तः आर्त्तवः । "ऋतोरण्" इत्यण्-प्रत्ययः । सः च असौ गुणः तिग्मत्वरूपः सः अवधीरितः तिरस्कृतः ,यस्य तम् अंशुमतः रुचां निचयं सुखतां सुखस्पर्शतां नयता प्रापयता । नयतेः द्विकर्मकत्वम् ॥ २५ ॥

नवपल्लवाञ्जलिभृतः प्रचये
बृहतस्तरून् गमयतावनतिम् ।
स्तृणता तृणैः प्रतिनिशं मृदुभिः
शयनीयतामुपयतीं वसुधाम् ॥ २६ ॥

पतितैरपेतजलदान् नभसः
पृषतैरपां शमयता च रजः ।
स दयालुनेव परिगाढकृशः
परिचर्य्ययानुजगृहे तपसा ॥ २७ ॥

महते फलाय तदवेक्ष्य शिवं
विकसन्निमित्तकुसुमं स पुरः ।

नवेति । प्रचये पुष्पावचयप्रसङ्गे नवपल्लवाः एव अञ्जलयः तान् बिभ्रति इति । तथोक्तान् बृहतः उच्चान् तरून् अवनतिं गमयता । "गतिबुद्धि" इत्यादिना तरूणां कर्मत्वम् । प्रतिनिशं निशि निशि शयनीयताम् उपयतीं शयनस्थानीभूताम् इत्यर्थः । वसुधां मृदुभिः तृणैः स्तृणता आच्छादयता ॥ २६ ॥

पतितैरिति । अपेतजलदात् निरभ्रात् नभसः पतितैः अपां पृषतैः जलविन्दुभिः रजश्च शमयता तपसा कर्त्रा दयालुना इव इति उत्प्रेक्षा । दयालुत्वं सूचयति । परिगाढकृशः अतिक्षीणः सः अर्जुनः परिचर्य्यया उक्तविधया शुश्रूषया अनुजगृहे अनुगृहीतः । अनुग्रहः अत्र सहकारित्वम् एव सर्वभूतानुकूल्यलिङ्गात् पचेलिमं तपः अस्य इति भावः । अत्र श्लोकद्वयस्य अपि एकवाक्यत्वात् उत्प्रेक्षा एव प्रधानालङ्कारः ॥२७॥

महत इति । सः अर्जुनः महते फलाय श्रेयसे शस्याय च

न जगाम विस्मयवशं वशिनां
न निहन्ति धैर्य्यमनुभावगुणः ॥२८॥
तदभूरिवासरकृतं सुकृतैः
उपलभ्य वैभवमनन्यभवम्।
उपतस्थुरास्थितविषादधियः
शतयज्वनो वनचरा वसतिम् ॥२९॥
विदिताः प्रविश्य विहितानतयः
शिथिलीकृतेऽधिकृतकृत्यविधौ।

त्रिक्रमत् पूर्वोक्तं शिवं निमित्तम् एव कुसुमं पुरः अग्रे अवेक्ष्य विस्मयवशं न जगाम। तथाहि। वशिनाम् अनुभावः एव गुणः स च धैर्य्यं न निहन्ति विस्मयादिविकारं न जनयति इत्यर्थः। "तपः क्षरति विस्मयात्" इति स्मरणात् इति भावः ॥२८॥

तदिति। सुकृतैः तपोभिः करणैः अभूरिभिः कतिपयैः एव वासरैः कृतं तत् पूर्वोक्तं वैभवम् अतः अन्यस्य न भवति इति अनन्यभवम् अन्यस्य असाध्यम् इत्यर्थः। पचाद्यजन्तो नञ्पदेन नञ्समासः। उपलभ्य निश्चित्य आस्थितविषादाः आसञ्जिताः धियः येषां ते वनचराः। "तत्पुरुषे कृति बहुलम्" इति बहुलग्रहणात् लुक्। शतेन शतस्य वा मखानां यज्वनः शतक्रतोः। अत्र संख्येयविशेषलाभः यजिसन्निधानात् अवगन्तव्यः। "यज्वा तु विधिनेष्टवान्" इत्यमरः। "सुयजोर्ङ्वनिप्"। वसतिम् उपतस्थुः प्रापुः ॥२९॥

विदिता इति। वनचराः इति अनुवर्त्तनीयम्। विदिताः ज्ञाताः अनुमतप्रवेशाः सन्तः इत्यर्थः। प्रविश्य विहितानतयः

अनपेतकालमभिरामकथाः
कथयाम्बभूवुरिति गोत्रभिदे ॥३०॥
शुचिवल्कवीतवपुरन्यतमः
तिमिरच्छिदामिव गिरौ भवतः ।
महते जयाय मघवन्ननघः
पुरुषस्तपस्यति तपन् जगतीम् ॥३१॥
स बिभर्त्ति भीषणभुजः
पृथु विद्विषां भयविधायि धनुः ।
अमलिन तस्य धृतसच्चरिताः
चरितेन चातिशयिता मुनयः ॥३२॥

कृतप्रणामाः अधिकृतकृत्यस्य नियुक्तकर्मणः शैलरक्षणात्मकस्य विधौ अनुष्ठाने शिथिलीकृते सति अनपेतकालम् अनतिक्रान्तकालं यथा तथा गोत्रभिदे शक्राय इति वक्ष्यमाणप्रकारेण अभिरामकथाः आख्यवाचः । "चिन्तिपूजिकथिकुम्बिचर्चश्च" इति अङ्प्रत्ययः । कथयाम्बभूवुः ॥३०॥

शुचीति । शुचिना वल्केन वल्कलेन वीतम् आच्छादितं वपुः यस्य सः । तिमिरच्छिदां सूर्य्यादीनाम् अन्यतमः इव स्थितः इत्युत्प्रेक्षा । अनघः पुरुषः हे मघवन् ! भवतः गिरौ इन्द्रकीले जगतीं भुवं तपन् तापयन् महते जयाय तपस्यति तपश्चरति । "कर्मणो रोमन्थ" इत्यादिना क्यङि लट् ॥३१॥

जयाय तपस्यति इत्युक्तं तत्र हेतुम् आह । स इति । भीषयेते इति भीषणौ । नन्द्यादित्वात् ल्युप्रत्ययः । तौ च तौ भुजङ्गौ च तौ इव भुजौ यस्य सः तथोक्तः पुरुषः विद्विषां भय-

मरुतः शिवा नवतृणा जगती
विमलं नभो रजसि वृष्टिरपाम् ।
गुणसम्पदाऽनुगुणतां गमितः
कुरुतेऽस्य भक्तिमिव भूतगणः ॥ ३३ ॥

इतरेतरानभिभवेन मृगाः
तमुपासते गुरुमिवान्तसदः ।
विनमन्ति चास्य तरवः प्रचये
परवान् स तेन भवतेव नगः ॥ ३४ ॥

विधायि पृथु धनुः विभर्त्ति अतः जयार्थी इत्यर्थः । अमलेन तस्य पुरुषस्य चरितेन धुतानि सच्चरितानि यैः ते मुनयः अतिशयिताः अतिक्रान्ताः ॥ ३२ ॥

अथ अस्य तपःसिद्धिं वर्णयति । मरुत इत्यादिना । मरुतः वाताः शिवाः सुखाः जगती पृथ्वी नवतृणा शयनासनाद्यनुकूला इत्यर्थः । नभः विमलं नीहारादिरहितं रजसि सति अपां वृष्टिः भवति इति शेषः । किं बहुना अस्य पुरुषस्य गुणसम्पदा भूतहितादिगुणसम्पत्त्या अनुगुणताम् अनुकूलतां गमितः वशीकृतः इत्यर्थः । भूतगुणः पृथिव्यादिपञ्चकं भक्तिं सेवां कुरुते इव इति उत्प्रेक्षा ॥ ३३ ॥

इतरेतरेति । किं च मृगाः पशवः तम् अन्ते अन्तिके सीदन्ति इति अन्तसदः अन्तेवासिनः। "सत्सूद्विष" इति क्विप्। गुरुम् इव इतरेतरेषाम् अनभिभवेन अद्रोहेण उपासते सेवन्ते। प्रचये पुष्पावचये तरवः अस्य विनमन्ति करप्रचेयाः भवन्ति इत्यर्थः । अस्य इति सम्बन्धसामान्ये षष्ठी । किं बहुना ।

उरु सत्त्वमाह विपरिश्रमता
परमं वपुः प्रथयतीव जयम् ।
शमिनोऽपि तस्य नवसङ्गमने
विभुतानुषङ्गि भयमेति जनः ॥ ३५ ॥

ऋषिवंशजः स यदि दैत्यकुले
यदि वान्वये महति भूमिभृताम् ? ।
चरतस्तपस्तव वनेषु सदा
न वयं निरूपयितुमस्य गतिम् ॥ ३६ ॥

सः मम इन्द्रकील: भवता इव तेन परमान् पराधीन माखि कस्य अपि तव इव तस्य अतिशयः वर्तते इत्यर्थः ॥ ३४ ॥

उर्विति । किं च विपरिश्रमता आयासे अपि अश्रान्तत्वम् उरु महत् सत्त्वम् अन्तःसारम् आह दुर्बलस्य श्रमजया सम्भवात् इति भावः । परमं वपुः जयं प्रथयति च आकारेण एव जिष्णुत्वं गम्यते इत्यर्थः । शमिनः शान्तस्य अपि तस्य नवसङ्गमने अपूर्वप्राप्तौ जनः विभुतायाः प्रभावस्य अनुषङ्गि व्यापकं न तु हिंसकत्वानुषङ्गि इति भावः । भयम् एति । शान्तोद्भवं पराभवं गमयति इति भावः ॥ ३५ ॥

अथ ईदृशः असौ कः इति चेत् तत् न विद्मः इति आह । ऋषीति । सः पुरुषः ऋषिवंशजः वा इति शेषः काकुः वा । यदि वा दैत्यकुले जातः इति शेषः । यदि वा महति भूमिभृताम् अन्वये जातः । तव वनेषु तपः चरतः अस्य गतिं स्वरूपं निरूपयितुं वयं सहन्ते इति सहाः । पचाद्यच् । न सहाः स्म इति शेषः ॥ ३६ ॥

विगणय्य कारणमनेकगुणं
निजयाऽथवा कथितमल्पतया ।
असदप्यद: सहितुमर्हसि न:
क्व वनेचरा: ? क्व निपुणा मतय: ? ॥ ३७ ॥
अधिगम्य गुह्यकगणादिति तत्
मनस: प्रियं प्रियसुतस्य तप: ।
निजुगोप हर्षमुदितं मघवा
नयवर्त्मगा: प्रभवतां हि धिय: ॥ ३८ ॥

अपृष्टपरिभाषणापराधं परिहरति । विगणय्येति । अनेक-गुणं बहुफलम् इन्द्रत्वाद्यनेकफलसाधकत्वेन योग्यम् इत्यर्थ: । कारणं तपोरूपं विगणय्य विचार्य्य अथवा निजया नैसर्गिक्या अल्पतया वालिश्येन वा कथितं न: अस्माकम् अद: इदं वचनम् इत्यर्थ: । असत् असाधु अपि सहितुं सोढुम् । "तीषसह" इत्यादिना विकल्पात् इड़ागम: । अर्हसि योग्य: असि । तर्हि सर्व्व किं न उक्तं तत्र आहु: । वनेचरा: क्व ? निपुणा: मतय: विवेकबुद्धय: क्व ? न उभयं सङ्गच्छते इत्यर्थ: । अज्ञानेन न अपराध्यन्ति इति भाव: । अर्थान्तरन्यास: अलङ्कार: ॥ ३७ ॥

अधिगम्येति । मघवा इन्द्र: इति पूर्वोक्तगुह्यकगणात् तत् मनस: प्रियं प्रियसुतस्य अर्जुनस्य तप: अधिगम्य ज्ञात्वा । गुल्यपत्त्यया समानकर्तृकत्वात् ल्यप्निर्देश: । उदितं तत् तपस: देवकार्य्यार्थत्वात् उत्पन्नं हर्षं निजुगोप गोपयामास । तथाहि । प्रभवतां प्रभूणां धिय: नयवर्त्मगा: नीतिमार्गानु-सारिण्य: हि । अन्यथा मन्त्रभेदे कार्य्यहानि: स्यात् इति भाव: ॥ ३८ ॥

प्रणिधाय चित्तमथ भक्ततया
विदितेऽप्यपूर्व इव तत्र हरिः ।
उपलब्धुमस्य नियमस्थिरतां
सुरसुन्दरीरिति वचोऽभिदधे ॥ ३९ ॥

सुकुमारमेकमणु मर्मभिदाम्
अतिदूरगं युतममोघतया ।
अविलक्ष्यमस्त्रमपरं कतमं
विजयाय यूयमिव चित्तभुवः ? ॥ ४० ॥

प्रणिधायेति । अथ हरिः इन्द्रः चित्तं प्रणिधाय विषयान्तरपरिहारेण आत्मनि अवस्थाप्य तत्र तस्मिन् अर्जुने भक्ततया विदिते सति अपि । उपलक्षणे तृतीया । अपूर्वः इव अविदितः इव इत्यर्थः । "पूर्वादिभ्यो नवभ्यो वा" इति विकल्पात् न स्मिन्नादेशः । अस्य अर्जुनस्य नियमे स्थिरतां दार्ढ्यम् उपलब्धुम् परीक्षितुम् इत्यर्थः । लोकप्रतीत्यर्थम् इति भावः । सुरसुन्दरीः इति वक्ष्यमाणप्रकारं वचः अभिदधे ॥ ३९ ॥

सुकुमारमिति । मर्मभिदां मर्मच्छेदिनाम् अस्त्राणां मध्ये इत्यर्थः । "यतश्च निर्द्धारणम्" इति षष्ठी । अपरम् अन्यत् कतमम् । "वा बहूनां जातिपरिप्रश्ने डतमच्" । यूयम् इव सुकुमारं न तु कठिनम् । अन्यत् तु कठिनं भवति । तथा एक न बहु तत् तु अनेकं भवति । तथा अणु सूक्ष्मं न स्थूलम् अलक्ष्यप्रवेशित्वात् इति भावः । तत् तु लक्ष्यप्रवेशि । तथा अतिदूरगं दूरलक्ष्यभेदि तत् तु समीपलक्ष्यभेदि । तथा अमोघतया अमोघत्वगुणेन युतं युक्तं न कदाचित् व्यभिचरति इति भावः । अन्यत् तु कदाचित् अपि लक्ष्यात् अपराध्यति । तथा अवि-

भववीतये हतबृहत्तमसाम्
अवबोधवारि रजसः शमनम् ।
परिपीयमाणमिव वोऽसकलैः
अवसादमेति नयनाञ्जलिभिः ॥४१॥

बहुधा गतां जगति भूतसृजा
कमनीयतां समभिहृत्य पुरा ।
उपपादिता विदधता भवतीः
सुरसद्मयानसुमुखी जनता ॥४२॥

लक्ष्यम् असत्प्रतिकारम् । अन्यत् विद्यमानप्रतीकारम् अस्य चित्तभुवः कामस्य । कर्त्तरि षष्ठी । विजयाय अस्ति इति जयः न किञ्चित् अस्ति इत्यर्थः । अत्र उपमालङ्कारः । साभिप्रायविशेषणत्वात् परिकरालङ्कारश्च । तयोः उभयोः अङ्गाङ्गिभावेन सङ्करः ॥४०॥

असामर्थ्यशङ्कां परिहरति । भवेति । भववीतये संसारनिवृत्तये हतबृहत्तमसां निरस्तमहामोहानां योगिनां हृद्यश्च रजोगुणः रजोधूलिः इति श्लिष्टरूपकं तस्य शमनं निवर्तकम् अवबोधः तत्त्वज्ञानम् एव वा तत् वः युष्माकम् असकलैः असमग्रैः नयनानि एव अञ्जलयः तैः परिपीयमाणम् इव इति उत्प्रेक्षा । अवसादं तपःक्षयम् एति । मुक्तान् अपि बध्नतीनां वः कथम् असामर्थ्यम् इति भावः । अत्र उत्प्रेक्षारूपकयोः सङ्करः ॥४१॥

बहुधेति । किं च पुरा जगति बहुधा गतां नानामुखेन विप्रकीर्णां कमनीयतां चन्द्राद्युपमानद्रव्यगतलावण्यं समभि-

तदुपेत्य विघ्नयत तस्य तपः
कृतिभिः कलासु सहिताः सचिवैः ।
हृतवीतरागमनसां ननु वः
सुखसङ्गिनं प्रति सुखावजितिः ॥४३॥
अविमृष्यमेतदभिलष्यति सः
द्विषतां वधेन विषयाभिरतिम् ।

कृत्वा संगच्छ भवतीः विदधता भूतसृजा ब्रह्मणा जनता जन समूहः। "ग्रामजन" इत्यादिना तल्। सुरसद्मयानसुमुखा स्वर्लोकयानाप्रवणा उपपादिता कृता। स्वर्गस्य अपि यत् प्रसादात् सर्वलोकश्लाघ्यत्वं तासां वः कथम् असामर्थ्यम् इति भावः। अत्र अप्सरसां प्रकीर्णलाक्षण्यसङ्गावासम्बन्धे अपि तत् सम्बन्धाभिधानात् अतिशयोक्तिः ॥४२॥

अथ कार्यशक्तिम् आह। तदिति। तत् तस्मात् ससदेव्यात कलासु गीतवाद्यादिषु कृतिभिः कुशलैः सचिवैः गन्धर्वैः सहिताः उपेत्य तस्य पुरुषस्य तपः विघ्नयत विघ्नवत् कुरुत विहत इत्यर्थः। विघ्नवच्छब्दात् मत्वन्तात् "तत्करोति" इति णिचि लोट्। णौ इष्टवद्भावात् मतुपः लुक्। न च अत्र असामर्थ्यशङ्का कार्या इति अर्थान्तरन्यासेन आह। हृतेति। ननु सम्बोधने हे अप्सरसः! हृतानि वशीकृतानि वीतरागाणां निस्पृहाणां मुमुक्षूणां मनांसि चित्तानि याभिः तासां वः युष्माकम् अप्सरसां सुखसङ्गिनं पुरुषं प्रति सुखाभिलाषिणं प्रति अवजितिः विजयः सुखा न तु दुष्करा खलु। तेन अयं सुखार्थी न मुमुक्षुः इति उक्तम् ॥४३॥

अथ सुखसङ्गित्वलिङ्गम् आह। अविमृष्येति। हे अप्सरसः

भववीतये न हि तथा स विधिः
क्व शरासनं ? क्व च विमुक्तिपथाः ? ॥४४॥
पृथुधाम्नि तत्र परिबोधि च मा
भवतीभिरन्यमुनिवद् विकृतिः ।
स्वयशांसि विक्रमवतामवतां
न वधूष्वघानि विमृषन्ति धियः ॥४५॥

न पुरुदः ह्रियतां शत्रूणां वधेन शत्रुहननद्वारा विषयाभिरतिं विषयसुखम् अभिलष्यति वाञ्छति । "वा भाग" इत्यादिना श्यन्प्रत्ययः । एतद्विषयसक्तत्वम् अविमृष्यम् असन्दिग्धम् । "ऋदुपधाच्चाकॢपिचृतेः" इति क्यप् । हि यस्मात् सः विधिः "अभिमतः सोपगभुजङ्गभुजः" इत्यादिश्लोकोक्तः अनुष्ठान प्रकारः भववीतये संसारमुक्तये न भवति । कुतः इति आह । शरासनं धनुः क्व ? विमुक्तेः पन्थाश्च क्व ? परस्परं विरुद्धम् इत्यर्थः । न खलु हिंसासाध्या मुक्तिः इति भावः । अर्थान्तरन्यासः अलङ्कारः ॥४४॥

न च शापभयम् अपि सम्भाव्यम् यस्मात् इति आह । पृथ्विति । पृथुधाम्नि महातेजसि तत्र तस्मिन् पुरुषविषये अन्यमुनिवत् अन्यस्मिन् मुनौ इव । "तत्र तस्येव" इति वतिप्रत्ययः । विकृतिः कोपविकारश्च भवतीभिः मा परिबोधि मा ज्ञायि मा शङ्कि इति यावत् । बुध्यतेः कर्मणि लुङ् माङ्योगात् अडागमाभावश्च । तथाहि । स्वयशांसि अवतां रक्षतां कोपनानाम् इत्यर्थः । विक्रमवतां धियः चित्तानि वधूषु स्त्रीविषयेषु अघानि व्यसनानि । "दुःखैनोव्यसनेष्वघम्" इत्यमरः । न विमृषन्ति । अर्थान्तरन्यासः । स्त्रीहिंसायाः

आशंसितापचितिचारु पुरः सुराणाम्
आदेशमित्यभिमुखं समवाप्य भर्त्तुः ।
लेभे परां द्युतिममर्त्त्यवधूसमूहः
सम्भावना ह्यधिकृतस्य तनोति तेजः ॥४६॥

प्रणतिमथ विधाय प्रस्थिताः सद्मनस्ताः
स्तनभरनमिताङ्गीरङ्गनाः प्रीतिभाजः ।
अचलनलिनलक्ष्मीहारि नालम्बभूव
स्तिमितममरभर्त्तुर्द्रष्टुमक्ष्णां सहस्रम् ॥४७॥

इति श्रीमहामहोपाध्यायभारविकृतौ किरा-
तार्जुनीये महाकाव्ये युवतिप्रस्थानं
नाम षष्ठः सर्गः ॥६॥

सुराणां यशोहानिकरत्वात् न सर्वथा वो हिनस्ति म इत्यर्थः ॥४५॥

आशंसितेति । अमर्त्त्यवधूसमूहः अप्सरसां गणः सुराणां पुरः अग्रे आशंसितापचितिभिः अपेक्षितसम्भावनाभिः चारु यथा तथा । "चयार्चयोरपचितिः" इत्यमरः । अभिमुखं सम्मुखं भर्त्तुः स्वामिनः इति पूर्वोक्तम् आदेशं नियोगं समवाप्य परां द्युतिं लेभे । तथाहि । अधिकृतस्य क्वचित् अधिकारे नियुक्तस्य सम्भावना स्वामिकृता पूजा तेजः कान्तिं तनोति ॥४६॥

प्रणतिमिति । अथ प्रणतिं विधाय सद्मनः इन्द्रभवनात् प्रस्थिताः प्रचलिताः स्तनभरैः नमितानि अङ्गानि यासां ताः । "अङ्गगात्रकण्ठेभ्यो वक्तव्यम्" इति ङीष् । प्रीतिभाजः स्वामिसम्भावनया सन्तुष्टाः ताः अङ्गनाः अचलनलिनानां स्थिरकम

## सप्तमः सर्गः ।

—❀—

श्रीमद्भिः सरथगजैः सुराङ्गनानां
गुप्तानामथ सचिवैस्त्रिलोकभर्तुः ।
सम्मूर्च्छन्नलघुविमानरन्ध्रभिन्नः
प्रस्थानं समभिदधे मृदङ्गनादः ॥१॥

नानां लक्ष्मीः हरति इति तत् तथोक्तम् तद्वत् मनोहरम् इत्यर्थः कृतः स्तिमितं विस्मयनिश्चलम् अमरभर्तुः अक्ष्णां सहस्रं कर्तृ द्रष्टुम् अलं समर्थं न बभूव। तासां सौन्दर्य-सागरस्य उद्वेलत्वात् इति भावः। अत्र उपमालङ्कारः ॥४७॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
किरातार्जुनीयव्याख्यायां घण्टापथसमाख्यायां
षष्ठः सर्गः ॥६॥

———

श्रीमद्भिरिति। अथ प्रस्थानानन्तरं श्रीमद्भिः शोभावद्भिः सह रथगजेन सरथगजाः तैः। "तेन सहेति तुल्ययोगे" इति बहुव्रीहिः। त्रयाणां लोकानां भर्तुः त्रिलोकभर्तुः इन्द्रस्य। "तद्धितार्थ" इत्यादिना उत्तरपदसमासः। सचिवैः गन्धर्वैः गुप्तानां सुराङ्गनानां प्रस्थानं गमनम् अलघुषु महत्सु विमान-रन्ध्रेषु विमानानां कुक्षिषु कुहरेषु भिन्नः प्रतिध्वानैः अनेकी-भूतः अत एव संमूर्च्छन् व्याप्नुवन् मृदङ्गनादः समभिदधे आचख्यौ। पौरेभ्यः इति शेषः। अस्मिन् सर्गे प्रहर्षिणीवृत्तम्। "म्नौ ज्रौ गः त्रिदशयतिः प्रहर्षिणीयम्" इति लक्षणात् ॥१॥

सोत्कण्ठैरमरगणैरनुप्रकीर्णात्
निर्याय ज्वलितरुचः पुरात् मघोनः ।
रामाणामुपरि विवस्वतः स्थितानां
नासेदे चरितगुणत्वमातपत्रैः ॥२॥
धूतानामभिमुखपातिभिः समीरैः
आयासादविशदलोचनोत्पलानाम् ।
आनिन्ये मदजनितां श्रियं वधूनाम्
उष्णांशुद्युतिजनितः कपोलरागः ॥३॥
तिष्ठद्भिः कथमपि देवतानुभावात्

सोत्कण्ठैरिति । सोत्कण्ठैः अप्रेक्षणात्सुकैः इत्यर्थः । अमर-गणैः अनुप्रकीर्णात् आकीर्णात् ज्वलितरुचः दीप्तप्रभात् मघोनः इन्द्रस्य पुरात् अमरावत्याः निर्याय निर्गत्य । यातेः ल्यपि । विवस्वतः उपरि स्थितानां रामाणाम् आतपात्त्रायन्ते इति आतपत्रैः । "सुपि" इति योगविभागात् कप्रत्ययः । चरित-गुणत्वं सार्थकत्वं न आसेदे न प्रापे । आतपत्राणाम् आतप-निवारणाकरणात् इति भावः ॥२॥

धूतानामिति । अभिमुखपातिभिः समीरैः प्रतिकूलवायुभिः धूतानाम् इति दुर्निमित्तसूचनम् । आयासात् गतिप्रयासात् अविशदलोचनोत्पलानां वधूनाम् उष्णांशुद्युतिजनितः आतप-कृतः कपोलानां रागः पाटलत्वं मदेन जनितां श्रियं तत्सदृशीं श्रियम् इत्यर्थः । अत एव निदर्शनालङ्कारः । आनिन्ये आनीत-वान् वधूः इति शेषः । आङ्पूर्वात् नयतेः कर्त्तरि लिट् । इकारानुबन्धत्वात् आत्मनेपदम् ॥३॥

आकृष्टैः प्रजविभिरायतं तुरङ्गैः ।
नेमीनामसति विवर्त्तने रथौघैः
आसेदे नभसि विमानवत्प्रवृत्तिः ॥४॥

कान्तानां कृतपुलकः स्तनाङ्गरागे
वक्त्रेषु च्युततिलकेषु मौक्तिकाभः ।
सम्पेदे श्रमसलिलोद्गमो विभूषा
रम्याणां विकृतिरपि श्रियं तनोति ॥५॥

राजद्भिः पथि मरुतामभिन्नरूपैः
उल्कार्चिःस्फुटगतिभिर्ध्वजांशुकानाम् ।

निर्षङ्गैरिति । कद्रम् अपि वाढम् । "कथमादौ तथाप्यन्ते यद्वं गौरववाढयोः" इति वैजयन्ती । देवतानाम् अनुभावात् निर्षङ्गैः अपतद्भिः इत्यर्थः । रथविशेषणम् एतत् । प्रजविभिः वेगवद्भिः तुरङ्गैः आयतं दूरम् आकृष्टैः रथौघैः वियति आकाशे नेमीनां चक्रधाराणाम् । "चक्रधारा प्रधिर्नेमिः" इति यादवः । विवर्त्तने भ्रमणे असति विमानवत् विमानानाम् इव इति उपमा । "तत्र तस्येव" इति वतिप्रत्ययः । प्रवृत्तिः गतिः आसेदे प्राप्ता । सदेः कर्मणि लिट् ॥४॥

कान्तानामिति । कान्तानां स्तनानाम् अङ्गरागे कृतपुलकः जनितोद्भेदः कृतरोमाञ्चः इत्यर्थः । च्युताः प्रमृष्टाः तिलकाः येषां तेषु वक्त्रेषु मौक्तिकाभः श्रमसलिलोद्गमः स्वेदोद्भेदः विभूषा भूषणं सम्पेदे सम्पन्नः । कर्त्तरि लिट् । तथाहि । रम्याणां स्वभावसुन्दराणां विकृतिः अपि श्रियं तनोति । अतः स्वेदस्य अपि विभूषणत्वम् उपपद्यते इति भावः ॥५॥

तेजोभिः कनकनिकाषराजिगौरैः
आयामः क्रियत इव स्म सातिरेकः ॥६॥
रामाणामवजितमाल्यसौकुमार्य्ये
सम्प्राप्ते वपुषि सहत्वमातपस्य ।
गन्धर्वैरधिगतविस्मयैः प्रतीये
कल्याणी विधिषु विचित्रता विधातुः ॥७॥
सिन्दूरैः कृतरुचयः सहेमकच्छ्याः
स्रोतोभिस्त्रिदशगजा मदं क्षरन्तः ।

राजद्भिरिति । मरुतां पथि आकाशे राजद्भिः दीप्यमानैः अभिन्नरूपैः अविच्छिन्नाकारैः अत एव उल्कानाम् अर्चींषि इव स्फुटगतीनि दीप्तमार्गाणि तैः कनकस्य निकाषः कषण तस्य राजिः रेखा तद्वत् गौरैः अरुणैः । "गौरः पीतेऽरुणे श्वेते" इति विश्वः । ध्वजांशुकानां तेजोभिः पताकाकान्तिभिः आयामः तेषाम् एव दैर्घ्यं सातिरेकः सातिशयः क्रियते स्म इव कृतः इव दीर्घाः ध्वजपटाः स्वतेजःप्रसारेण दीर्घतमाः इव लक्ष्यन्ते इति उत्प्रेक्षा । सा च उल्काद्युपमानुप्राणिता ॥६॥

रामाणामिति । माला एव माल्यं तस्य सौकुमार्य्यम् अवजितं येन तस्मिन् कुसुमात् अपि मनोहरे इत्यर्थः । रामाणां वपुषि आतपस्य । कृद्योगे कर्मणि षष्ठी । सहते इति सहः क्षमः । पचाद्यच् । तस्य भावः सहत्वम् । तत् सम्प्राप्ते सति अधिगतविस्मयैः सम्प्राप्ताश्चर्य्यैः गन्धर्वैः विधातुः विधिषु सृष्टिषु कल्याणी साध्वी श्रेयसी उपकारकत्वात् इति भावः । विचित्रता नानाविधत्वं प्रतीये अवगता ज्ञाता । प्रतिपूर्वात् इणः कर्मणि लिट् ॥७॥

सादृश्यं ययुररुणांशुरागभिन्नैः
वर्षद्भिः स्फुरितशतह्रदैः पयोदैः ॥८॥
अत्यर्थं दुरुपसदादुपेत्य दूरं
पर्य्यन्तादहिममयूखमण्डलस्य।
आशानामुपरिचितामिवैकवेणीं
रम्योर्मिं त्रिदशनदीं ययुर्बलानि ॥९॥
आमत्तभ्रमरकुलाकुलानि धुन्वन्
उद्भूतग्रथितरजांसि पङ्कजानि।

सिन्दूरैरिति। सिन्दूरैः नागसम्भवैः रागद्रव्यविशेषैः।"सिन्दूरं नागसम्भवम्"इत्यमरः। कृतरुचयः अलङ्कृताः इत्यर्थः। सह हेम्नः कक्ष्याभिः मध्यबन्धनैः सहेमकक्ष्याः। "तेन सहेति तुल्ययोगे" इति बहुव्रीहिः। "कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्यां मध्यं भवन्धने" इत्यमरः। स्रोतोभिः सप्तभिः मदनाडीभिः। "कराकटाभ्यां मेढ्राच्च नेत्राभ्याञ्च मदच्युतिः"इति पालकाव्ये। करात् नासारन्ध्राभ्याम् इत्यर्थः। मदं क्षरन्तः वर्षन्तः त्रिदशगजाः अरुणस्य अर्कस्य अंशूनां रागेण आरुण्येन भिन्नैः संसृष्टैः वर्षद्भिः स्फुरितशतह्रदैः स्फुरिततडिद्भिः पयोदैः सादृश्यं ययुः इति उपमालङ्कारः ॥८॥

अत्यर्थमिति। बलानि सैन्यानि अत्यर्थं दुरुपसदात् दुःसङ्गात् अहिममयूखमण्डलस्य सूर्यबिम्बस्य पर्यन्तात् समीपात दूरम् उपेत्य आगत्य आशानाम् उपरिचितां गुम्फिताम् एकवेणीम् इव स्थिताम् इत्युत्प्रेक्षा। रम्याः ऊर्मयः तरङ्गाः भङ्गाश्च यस्याः तां त्रिदशनदीं मन्दाकिनीं ययुः प्रापुः ॥९॥

कान्तानां गगननदीतरङ्गशीतः
सन्तापं विरमयति स्म मातरिश्वा ॥१०॥
सम्भिन्नैरिभतुरगावगाहनेन
प्राप्योर्वीरनु पदवीं विमानपङ्क्तीः ।
तत्पूर्वं प्रतिविदधे सुरापगायाः
वप्रान्तस्खलितविवर्त्तनं पयोभिः ॥११॥
कान्तानां ग्रहचरितात् पथो रथानां
अक्षाग्रक्षतसुरवेश्मवेदिकानाम् ।

आमत्तेति । आमत्तैः भ्रमरकुलैः आकुलानि उद्धतानि उत्थापितानि ग्रथितानि अन्योन्यसम्बद्धानि च रजांसि येषु तानि पङ्कजानि धुन्वन् कम्पयन् सुरभिः इत्यर्थः । गगननदीतरङ्गैः शीतः मातरिश्वा वायुः कान्तानां सन्तापं विरमयति स्म शमयामास । मातरि अन्तरिक्षे श्वयति इति निरुक्तिः ॥१०॥

सम्भिन्नैरिति । इभतुरगावगाहनेन हस्त्यश्वावलोडनेन सम्भिन्नैः संक्षुभितैः सुरापगायाः पयोभिः कर्त्तृभिः पदवीम् अनु पदव्याम् इत्यर्थः । "लक्षणेत्थम्भूत" इत्यादिना कर्मप्रवचनीयत्वात् द्वितीया । उर्वीः विपुलाः विमानपङ्क्तीः प्राप्य तत्र पूर्वं तत्पूर्वम् इदं प्रथमं यथा तथा आकाशगङ्गायाः तटाभावात् इति भावः । वप्रान्तेषु रोधोभूमिषु स्खलितानि नैवर्त्तनं प्रत्यावृत्तिः वप्रान्तस्खलितविवर्त्तनं तटान्तस्खलनविवर्त्तनम् । "वप्रः पितरि केदारे वप्रः प्राकाररोधसोः" इति वैजयन्ती । प्रतिविदधे चक्रे इति अतिशयोक्तिः ॥११॥

कान्तानामिति । ग्रहैः सूर्य्यादिभिः चरितात् आश्रितात्

निःसङ्गं प्रधिभिरुपाददे विवृत्तिः
सम्पीडक्षुभितजलेषु तोयदेषु ॥१२॥
तप्तानामुपदधिरे विषाणभिन्नाः
प्रह्लादं सुरकरिणां घनाः क्षरन्तः।
युक्तानां खलु महतां परोपकारे
कल्याणी भवति रुजत्स्वपि प्रवृत्तिः ॥१३॥
संवाता मुहुरनिलेन नीयमाने
दिव्यस्त्रीजघनवरांशुके विवृत्तिम्।

कर्मणि क्तः। पथः मार्गात्। क्रान्तानां निष्क्रान्तानां अक्षाः चक्रधराः दारुविशेषाः तेषाम् अग्रैः क्षताः दारिताः सुरवेश्म-वेदिकाः यैः तेषां रथानां प्रधिभिः नेमिभिः चक्रान्तैः। "चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्री स्यात् प्रधिः पुमान्" इत्यमरः। सम्पीडेन नोदनेन क्षुभितानि जलानि येषां तेषु तोयदेषु निःसङ्गम् अप्रतिघातं यथा तथा विवृत्तिः परिभ्रमणम् उपाददे स्वीकृता इति अतिशयोक्तिः स्वभावोक्त्या संसृज्यते॥१२॥

तप्तानामिति। विषाणभिन्नाः गजदन्तक्षताः। "विषाणं दन्तशृङ्गयोः" इति हलायुधः। अत एव क्षरन्तः स्रवन्तः घनाः तप्तानां सुरकरिणां प्रह्लादम् उपदधिरे उपचक्रिरे। तथाहि। परोपकारे युक्तानाम् आसक्तानां रुजत्सु अपि पीडयत्सु अपि विषये कल्याणी हितकारिणी खलु प्रवृत्तिः व्यापारः भवति इति अर्थान्तरन्यासः अलङ्कारः। ततः युक्तं मेघानां गजदन्त-क्षतानाम् अपि तदाह्लादकत्वम् इति भावः॥१३॥

संवातेति। संवाता संवहता। वातेर्गत्यर्थत्वात् गत

पर्य्यस्यत्पृथुमणिमेखलांशुजालं
संजज्ञे युतकमिवान्तरीयमूर्व्वाः ॥१४॥
प्रत्यार्द्रीकृततिलकास्तुषारपातैः
प्रह्लादं शमितपरिश्रमा दिशन्तः ।
कान्तानां बहुमतिमाययुः पयोदाः
नाल्पीयान् बहु सुकृतं हिनस्ति दोषः ॥१५॥
यातस्य ग्रथिततरङ्गसैकताभे
विच्छेदं विपयसि वारिवाहजाले ।

प्रत्ययः । अनिलेन कामिना इति भावः । दिव्यस्त्रीणां जघनेषु वरं श्रेष्ठं यत् अंशुकं तस्मिन् विवृत्तिम् अपसारं मुहुर्नीयमाने सति पर्य्यस्यत् प्रसरत् पृथु विशालं मणिमेखलांशुजालम् ऊर्व्वाः युतकं चलनाख्यम् इव । "युतकं संशये युग्मे यौतके चलनेऽपि च" इति विश्वः । अन्तरे भवम् अन्तरीयम् अधोंऽशुकम् । "गहादिभ्यश्च" इति छप्रत्ययः । "अन्तरीयोपसंव्यानपरिधानान्यधोंऽशुके" इत्यमरः । संजज्ञे संजातम् । जनिधातोः कर्त्तरि लिट् । उत्प्रेक्षालङ्कारः ॥१४॥

प्रत्येति । तुषारपातैः शीकरवर्षैः । "तुषारौ हिमशीकरौ" इति विश्वः । प्रत्यार्द्रीकृततिलकाः मार्जितविशेषकाः अपि शमितपरिश्रमाः प्रह्लादम् आनन्दं दिशन्तः पयोदाः कान्तानाम् । कर्त्तरि षष्ठी । बहुमतिं सम्मानम् आययुः । तथाहि । अल्पीयान् अल्पः दोषः बहु प्रभूतं सुकृतम् उपकारं न हिनस्ति न हन्ति । अर्थान्तरन्यासः अलङ्कारः ॥१५॥

यातस्येति । ग्रथिततरङ्गं बद्धोर्मि यत् सैकतं तस्य आभा

आतेनुश्छिद्रशवधूजनाङ्गभाजां
सन्धानं सुरधनुषः प्रभा मणीनाम् ॥ १६ ॥
संसिद्धाविति करणीयसन्निबद्धैः
आलापैः पिपतिषतां विलङ्घ्य वीथीम् ।
आसेदे दशशतलोचनध्वजिन्या
जीमूतैरपिहितसानुरिन्द्रकीलः ॥ १७ ॥

इव आभा यस्य तस्मिन् विगतानि पयांसि यस्मात् तस्मिन् निर्जले । "शेषाद्विभाषा" इत्यादिना पाक्षिकत्वात् नञ्समासान्तः । उरःप्रभृतिपाठस्तु पयःशब्दस्य एकवचनान्तस्य एव इति न कश्चित् विरोधः । वारिवाहजाले मेघवृन्दे विच्छेदं त्रुटिं यातस्य सुरधनुषः इन्द्रचापस्य त्रिदशवधूजनाङ्गभाजां मणीनां तदङ्गसङ्गिविभूषामणीनाम् इत्यर्थः । प्रभाः कान्तयः सन्धानम् आतेनुः चक्रुः । अत्र आभरणप्रभाणाम् इन्द्रधनुषः असम्बन्धे अपि सम्बन्धाभिधानात् अतिशयोक्तिः अलङ्कारः॥१६॥

संसिद्धाविति । संसिद्धौ कार्यसिद्धिविषये इति इत्थंभाविना प्रकारेण कर्त्तव्यम् इतिकरणीयं तेन सन्निबद्धैः संयोजितैः इत्यर्थः । आलापैः आभाषणैः उपलक्षिताः । "स्यादाभाषणमालापः" इत्यमरः । दशशतानि संख्या येषु तानि लोचनानि यस्य सः सहस्रलोचनः इत्यर्थः तस्य ध्वजिन्या सेनया पिपतिषतां पक्षिणां वीथीं मार्गम् । "पतत्त्रिपत्त्रिपतगपतत्पत्त्ररथाण्डजाः । नगौकोवाजिविकिरविविष्किरपतत्रयः ।। नीडोद्भवा गरुत्मन्तः पित्सन्तो नभसङ्गमाः" इत्यमरः । "तनिपति" इत्यादिना विकल्पात् इडागमः । विलङ्घ्य जीमूतैः जीवस्य उदकस्य मूतः पटबन्धः येषां ते तैः । पृषोदरादित्वात् साधुः । अपिहितसानुः आच्छादिततटः

आकीर्णा मुखनलिनैर्विलासिनीनाम्
उद्धूतस्फुटविशदातपत्रफेना।
सा तूर्य्यध्वनितगभीरमापतन्ती
भूभर्त्तुः शिरसि नभोनदीव रेजे॥ १८॥

सेतुत्वं दधति पयोमुचां विताने
संरम्भादभिपततो रथान् जवेन।
आनिन्युर्नियमितरश्मिभुग्नघोणाः
कृच्छ्रेण क्षितिमवनामिनस्तुरङ्गाः॥ १९॥

उन्नतः इत्यर्थः। इन्द्रकीलः आसेदे प्राप्तः। सीदतेः कर्मणि लिट्॥१७॥

आकीर्णेति। विलासिनीनां मुखनलिनैः। उपमितसमासः। आकीर्णा व्याप्ता उद्धूतानि ऊर्द्ध्वम् उत्क्षिप्तानि स्फुटानि असङ्कुचितानि विशदातपत्राणि श्वेतच्छत्राणि फेनाः इव यस्याः तथोक्ता तूर्य्यध्वनितैः वाद्यघोषैः गभीरं यथा तथा भूभर्त्तुः इन्द्रकीलस्य शिरसि आपतन्ती सा सेना नभोनदी इव रेजे॥१८॥

सेतुत्वमिति। पयोमुचां विताने सेतुत्वं दधति सति संरम्भात् आटोपात् जवेन अभिपततः मेघवृन्दम् अधरीकृत्य धावतः इत्यर्थः। तथाभूतान् रथान् नियमितैः आकृष्टैः रश्मिभिः भुग्नाः आकुञ्चिताः घोणाः प्रोथाः येषां ते। "कुञ्चितं नतम्। आविद्धं कुटिलं भुग्नं वेल्लितं वक्रम्" इत्यमरः। "किरणप्रग्रहौ रश्मी" इत्यमरः। "घोणा तु प्रोथमस्त्रियाम्" इत्यमरः। अवनमन्ति इति अवनामिनः अवनतपूर्वकायाः

माहेन्द्रं नगमभितः करेणुवर्य्याः
पर्य्यन्तस्थितजलदा दिवः पतन्तः।
सादृश्यं निलयननिष्प्रकम्पपक्षैः
आजग्मुर्जलनिधिशायिभिर्नगेन्द्रैः॥ २०॥

उत्सङ्गे समविषमे समं महाद्रेः
क्रान्तानां वियदभिपातलाघवेन।
आमूलादुपनदि सैकतेषु लेभे
सामग्र्यं खुरपदवी तुरङ्गमाणाम्॥ २१॥

तुरङ्गाः कष्टेण महता प्रयत्नेन क्षितिम् आनिन्युः इति स्वभावोक्तिः॥ १९॥

माहेन्द्रमिति। माहेन्द्रं नगम् अभितः इन्द्रकीलाभिमुखम्। "अभितः परितः" इत्यादिना द्वितीया। दिवः अन्तरिक्षात् पतन्तः अवतरन्तः पर्य्यन्तस्थिताः पार्श्वस्थाः जलदाः येषां ते करेणुवर्य्याः करेणुषु वर्य्याः श्रेष्ठाः इत्यर्थः। "न निर्द्धारणे" इति षष्ठीसमासनिषेधात् "सप्तमी" इति योगविभागात् सप्तमीसमासः। निलयने स्थाने निष्प्रकम्पपक्षैः निश्चलपक्षैः जलनिधिशायिभिः नगेन्द्रैः मैनाकादिभिः सादृश्यम् आजग्मुः इत्युपमा॥ २०॥

उत्सङ्ग इति। महाद्रेः उत्सङ्गे मूर्ध्नि विषये यत् समविषमं समं च विषमं च निम्नोन्नतं तस्मिन्। द्वन्द्वैकवद्भावः। वियदभिपातलाघवेन गगनसञ्चारपाटवेन समम् एकरूपम् आरोहावरोहरहितम् इत्यर्थः क्रान्तानां गच्छतां तुरङ्गमाणां खुरपदवी खुरपङ्क्तिः उपनदि नदीसमीपे। "अव्ययीभावश्च",

सध्वानं निपतितनिर्झरासु मन्द्रैः
सम्मूर्च्छन् प्रतिनिनदैरधित्यकासु।
उद्ग्रीवैर्घनरवशङ्कया मयूरैः
सोत्कण्ठं ध्वनिरुपशुश्रुवे रथानाम् ॥२२॥
सम्भिन्नामविरलपातिभिर्मयूखैः
नीलानां भृशमुपमेखलं मणीनाम्।

इति नपुंसकत्वात् ह्रस्वत्वम्। सैकतेषु आमूलात् मूलम् आरभ्य आदितः आरभ्य इति यावत् समग्रस्य भावः सामग्र्यं लेभे। सैकतात् अन्यत्र निम्नेषु गगनचारिणि समप्रदेशवत् विषमे खुरस्पर्शाभावात् विच्छिन्ना खुरसरणिः सैकतेषु तु सर्वत्र समत्वात् अविच्छिन्ना इत्यर्थः॥ २१॥

सध्वानमिति। सध्वानं सशब्दं निपतिता: निर्झराः प्रवाहाः यासु तासु। "प्रवाहो निर्झरो झरः" इत्यमरः। अधित्यकासु नगोर्द्ध्वभूमिषु। "भूमिरूर्द्ध्वमधित्यका" इत्यमरः। "उपाधिभ्याम्" इत्यादिना त्यकन्प्रत्ययः। मन्द्रैः गम्भीरैः। "कलो मन्द्रस्तु गम्भीरे" इत्यमरः। प्रतिनिनदैः प्रतिध्वानैः सम्मूर्च्छन् वर्द्धमानः रथानां ध्वनिः घनरवशङ्कया मेघगर्जितभ्रमेण इति भ्रान्तिमदलङ्कारः। उद्ग्रीवैः मयूरैः सोत्कण्ठम् उपशुश्रुवे उपश्रुतः। शृणोतेः कर्मणि लिट्॥ २२॥

सम्भिन्नामिति। अविरलपातिभिः निरन्तरप्रसारिभिः उपमेखलं मेखलातटेषु इत्यर्थः। "अथ मेखला श्रोणिस्थानेऽद्रिकटके कटिबन्धेऽसिबन्धने" इति यादवः। नीलानां मणीनां मयूखैः भृशं सम्भिन्नाम् एकीभूताम् अत एव नभः अन्तराले विच्छिन्नाम् इव स्थिताम् इति उत्प्रेक्षा। वप्राम्भःस्रुतिं वप्रो-

विच्छिन्नामिव वनिता नभोऽन्तराले
वप्राम्भःस्रुतिमवलोकयाम्बभूवुः ॥ २३ ॥

आसन्नद्विपपदवीमदानिलाय
क्रुध्यन्तो धियमवमत्य धूर्गतानाम् ।
सव्याजं निजकरिणीभिरात्तचित्ताः
प्रस्थानं सुरकरिणः कथञ्चिदीषुः ॥ २४ ॥

नीरन्ध्रं पथिषु रजो रथाङ्गनुन्नं
पर्य्यस्यत् नवसलिलारुणं वहन्ती ।
आतेने वनगहनानि वाहिनी सा
घर्मान्तक्षुभितजलेव जह्नुकन्या ॥ २५ ॥

दकधारां वनिताः अवलोकयाम्बभूवुः । वप्राम्भःस्रुतं स्वधर्वान्नि-मत्यागेन इन्द्रनीलानां नीलिमस्वीकाररूपतद्गुणोत्थापिता विच्छेदोत्प्रेक्षा इति तयोः अङ्गाङ्गिभावेन सङ्करः । तेन च नैल्याविच्छेदभ्रमरूपः भ्रान्तिमान् व्यज्यते ॥ २३ ॥

आसन्नेति । धुरं गताः तेषां धूर्गतानां नियन्तॄणां धियम् अवमत्य अगणयित्वा अवज्ञाय इति यावत् आसन्नायां द्विपपदव्यां वनगजमार्गे यः मदानिलः तस्मै क्रुध्यन्तः तं प्रति कुप्यन्तः । "क्रुधद्रुह" इत्यादिना सम्प्रदानत्वात् चतुर्थी । सव्याजं सकपटं निजकरिणीभिः आत्तचित्ताः आकृष्टचित्ताः सुरकरिणः देवनागाः प्रस्थानं गमनं कथञ्चित् कष्टेन ईषुः अभिलेषुः ॥२४॥

नीरन्ध्रमिति । नीरन्ध्रं सान्द्रं पथिषु रथाङ्गैः चक्रैः नुन्नं प्रेरितम् । "नुत्तनुन्नास्तनिष्ठ्यूतविद्धाक्षिप्तेरिताः समाः" इत्यमरः । पर्य्यस्यत् प्रसरत् नवसलिलम् इव अरुणं रजः वहन्ती

सम्भोगक्षमगहनामथोपगङ्गं
बिभ्राणां ज्वलितमणीनि सैकतानि।
अध्यूषुस्तुतकुसुमाचितां सहाया
वृत्रारेरविरलशाद्वलां धरित्रीम्॥ २६॥
भूभर्त्तुः समधिकमादधे तदोर्व्याः
श्रीमत्तां हरिसखवाहिनीनिवेशः।
संसक्तौ किमसुलभं महोदयानाम्?
उच्छ्रायं नयति यदृच्छयापि योगः॥ २७॥

सा वाहिनी सेना घर्मान्ते प्रावृषि क्षुभितजला कलुषोदका इत्यर्थः जह्नुकन्या गङ्गा इव वनानि फलकुसुमप्रधानानि गहनानि जीर्णानि च तानि च तानि वनगहनानि आततं व्यानशे। अत्र समासगतवाक्यगतोपमयोः सजातीययोः अङ्गाङ्गिभावेन सङ्करः॥ २५॥

सम्भोगेति। अथ वृत्रारेः शक्रस्य सहायाः सचिवाः गन्धर्वाः उपगङ्गं गङ्गासमीपे। अव्ययीभावस्य नपुंसकत्वात् ह्रस्वत्वम्। सम्भोगक्षमगहनाम् उपभोगयोग्यवनां ज्वलिताः मणयः येषु तानि सैकतानि बिभ्राणाम्। भृञः कर्त्तरि लटः शानच्। च्युतैः स्वयं पतितैः कुसुमैः आचितां व्याप्ताम् अविरलाः सान्द्राः शाद्वलाः शादप्रायदेशाः यस्यां सा तां धरित्रीम् अध्यूषुः अधितस्थुः। वसतेर्यजादित्वात् सम्प्रसारणम्। अत्र धरित्रीविशेषणार्थानाम् अधिवासहेतुत्वात् अनेकपदार्थहेतुकं काव्यलिङ्गम् अलङ्कारः॥ २६॥

भूभर्त्तुरिति। तदा हरिसखवाहिनीनिवेशः गन्धर्वसेनाशिबिरम्। "निवेशः शिबिरोद्वाहविन्यासेषु प्रकीर्त्तितः" इति

सामोदाः कुसुमतरुश्रियो विविक्ताः
सम्पत्तिः किशलयशालिनीलतानाम्।
साफल्यं ययुरमराङ्गनोपभुक्ताः
सा लक्ष्मीरुपकुरुते यया परेषाम् ॥२८॥
क्रान्तोऽपि त्रिदशवधूजनः पुरस्तात्

शाश्वतः। भूभर्तुः पर्वतस्य उर्व्याः समधिकं पूर्वस्मात् अभ्यधिकं यथा तथा श्रीमत्तां श्रियम् इत्यर्थः आदधे जनयामास। तथाहि, महोदयानां महात्मनां संसक्तौ सम्यक्सम्बन्धे "संभक्तौ" इति पाठे तु सम्यक्सेवायां किम् असुलभं? न किञ्चित् दुर्लभम् इत्यर्थः। यतः यदृच्छया दैवात् योगः अपि उच्छ्रायम् उत्कर्षं नयति। अत्र प्रकृतयदृच्छया योगस्य उत्कर्षाभिधानात् अप्राकृतभक्तियोगस्य उत्कर्षाधायकत्वे कैमुतिकन्यायेन अर्थापत्तिः इति प्राकरणिकात् अप्राकरणिकरूपार्थापत्तिःअलङ्कारः। तदुक्तम्। "एकस्य वस्तुनो भावाद्यत्र वस्त्वन्यथा पतेत्। कैमुत्येन यतः सा स्यादर्थापत्तिरलङ्क्रिया॥" इति ॥२७॥

सामोदा इति। सामोदाः ससौरभाः कुसुमप्रधानाः तरवः। शाकपार्थिवादिषु द्रष्टव्यः। तेषां श्रियः सम्पदः विविक्ताः विजनप्रदेशाः। "विविक्तविजनच्छन्ननिःशलाकास्तथा रहः" इत्यमरः। किशलयशालिनीलतानां नवपल्लवयुतवल्लीनां सम्पत्तिः एताः अमराङ्गनोपभुक्ताः सत्यः साफल्यं ययुः। तथाहि, यया लक्ष्म्या करणेन परेषाम् उपकुरुते लक्ष्मीवान् इति शेषः। सा लक्ष्मीः न अन्या इति भावः। परेषाम् इत्यत्र "अनुकरोति भगवतो नारायणस्य" इत्यादिवत् क्रियायोगे हि सम्बन्धसामान्ये षष्ठी ॥२८॥

लीनाहिश्वसितविलोलपल्लवानाम्।
सेव्यानां हतविनयैरिवावृतानां
सम्पर्कं परिहरति स्म चन्दनानाम्॥२९॥

उत्सृष्टध्वजकुथकङ्कटा धरित्रीम्
आनीता विदितनयैः श्रमं विनेतुम्।
आक्षिप्तद्रुमगहना युगान्तवातैः
पर्यस्ता गिरय इव द्विपा विरेजुः॥३०॥

प्रस्थानश्रमजनितां विहाय निद्राम्
आमुक्ते गजपतिना सदानपङ्के।

क्रान्त इति। क्रान्तः अपि त्रिदशवधूजनः पुरस्तात् अग्रे लीनानां संश्रितानाम् अहीनां श्वसितैः निःश्वासैः विलोलाः पल्लवाः येषां तेषां चन्दनानां सम्पर्कं हतविनयैः दुर्जनैः खलैः आवृतानां संवृतानां सेव्यानां प्रभूणां सम्पर्कम् इव परिहरति स्म। दुष्टसंसृष्टाः गुणाढ्याः अपि त्याज्याः इति भावः॥२९॥

उत्सृष्टेति। उत्सृष्टाः आक्षिप्ताः ध्वजाः कुथाः आस्तरणानि कङ्कटाः तनुत्राणानि च येभ्यः ते। "प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथो द्वयोः" इत्यमरः। विदितनयैः शिक्षाभिज्ञैः यन्तृभिः श्रमं विनेतुं क्लमम् अपनेतुं धरित्रीम् आनीताः निवेश्यमानाः इत्यर्थः। द्विपाः युगान्तवातैः आक्षिप्तानि उद्धृतानि द्रुमाणां गहनानि वनानि येभ्यः ते पर्यस्ताः विपर्यासिताः गिरयः इव विरेजुः शुशुभिरे॥३०॥

प्रस्थानेति। गजपतिना प्रस्थानश्रमेण गमनक्लेशेन जनितां निद्रां विहाय आमुक्ते अत एव सदानपङ्के गजमदयुक्ते शय्यान्ते

शय्यान्ते कुलमलिनां क्षणं विलीनं
संरम्भच्युतमिव शृङ्खलं चकाशे ॥३१॥
आयस्तः सुरसरिदोघरुद्धवर्त्मा
सम्प्राप्तुं वनगजदानगन्धि रोधः ।
मूर्द्धानं निशितशिताङ्कुशं विधुन्वन्
यन्तारं न विगणयाञ्चकार नागः ॥३२॥
आरोढुः समवनतस्य पीतशेषे
साशङ्कं पयसि समीरिते करेण ।

शयनीयप्रदेशे क्षणं विलीनं लग्नम् अलिनां कुलं संरम्भेण उत्थानसम्भ्रमेण च्युतं भ्रष्टं शृङ्खलं निगडम् इव इत्युत्प्रेक्षा । "अथ शृङ्खले । अन्दुको निगडोऽस्त्री स्यात्" इत्यमरः । चकाशे शुशुभे ॥३१॥

आयस्त इति । वनगजदानस्य गन्धः अस्य अस्ति इति तथोक्तं रोधः परकूलम् इत्यर्थः सम्प्राप्तुं गन्तुम् आयस्तः उत्सुकः प्रयत्नं कुर्वाणः इत्यर्थः । "यसु प्रयत्ने" इति धातोः कर्त्तरि क्तः । किन्तु सुरसरिदोघेन गङ्गाप्रवाहेण रुद्धं वर्त्म यस्य सः । नागः गजः निशितः दन्तः शितः तीक्ष्णः अङ्कुशः यस्मिन् । "अङ्कुशोऽस्त्री सृणिः स्त्रियाम्" इत्यमरः । तं मूर्द्धानं विधुन्वन् रोषात् इति भावः । यन्तारं न विगणयाञ्चकार न विगणयामास ॥३२॥

आरोढुरिति । समवनतस्य जलपानार्थम् आनतपूर्वकायस्य करेणोः गजस्य । "करेणुरिभ्यां स्त्री नेभे" इत्यमरः । करेण पीतस्य शेषे पयसि आरोढुः हस्तिपकार[illegible] मभयं समी-

सम्मार्जन् अरुणमदस्रुतौ कपोलौ
सस्यन्दे मद इव शीकरः करेणोः ॥३३॥
आघ्राय क्षणमतितृष्यतापि रोषात्
उत्तीरं निहितविवृत्तलोचनेन ।
सम्पृक्तं वनकरिणां मदाम्बुसेकैः
नाचेमे हिममपि वारि वारणेन ॥३४॥
प्रश्च्योतन्मदसुरभीणि निम्नगायाः
क्रीडन्तो गजपतयः पयांसि कृत्वा ।
किञ्जल्कव्यवहितताम्रदानलेखैः
उत्तेरुः सरसिजगन्धिभिः कपोलैः ॥३५॥

रिते क्षिप्ते सति इत्यर्थः। शीकरः अम्बुकणः अरुणे मदस्रुतौ मदधारे ययोः तौ कपोलौ सम्मार्जन् प्रमृजन्। "मृजेरजादौ संक्रमे विभाषावृद्धिर्वक्तव्या" इति वृद्धिः। मदः इव सस्यन्दे स्रवन्मदसम्पृक्तस्य मदसादृश्यात् मदोपमा ॥३३॥

आघ्रायेति। अतितृष्यता अपि अतिपिपासता अपि क्षणम् आघ्राय रोषात् उत्तीरं परतीरे। विभक्त्यर्थे अव्ययीभावः। निहिते विवृत्ते घूर्णिते लोचने यस्य तेन प्रतिगजदिदृक्षया इति भावः। वारणेन हिमं शीतलम् अपि वनकरिणां मदाम्बुसेकैः दानधाराभिः सम्पृक्तं वारि न आचेमे न पीतम्। "चमु अदने" इति धातोः कर्मणि लिट् ॥३४॥

प्रश्च्योतदिति। क्रीडन्तः विहरन्तः गजपतयः निम्नगायाः गङ्गायाः पयांसि प्रश्च्योतद्भिः क्षरद्भिः मदैः सुरभीणि कृत्वा किञ्जल्कैः केसरैः व्यवहिताः तिरोहिताः ताम्रवर्णाः दानलेखा

आकीर्णं बलरजसा घनारुणेन
प्रक्षोभैः सपदि तरङ्गितं तटेषु ।
मातङ्गोन्मथितसरोजरेणुपिङ्गं
माञ्जिष्ठं वसनमिवाम्बु निर्बभासे ॥३६॥
श्रीमद्भिर्नियमितकन्धरापरार्धैः
संसक्तैरगुरुवनेषु साङ्गहारम् ।
सम्प्रापे निसृतमदाम्बुभिर्गजेन्द्रैः
प्रस्यन्दिप्रचलितगण्डशैलशोभा ॥३७॥

मदराजयः येषु तैः अत एव सरसिजगन्धिभिः कपोलैः उपलक्षिताः सन्तः उत्तेरुः निर्जग्मुः। अत्र मदसरसिजगन्धयोः समयोः विनिमयोक्त्या समपरिवृत्तिः अलङ्कारः । तेन गजानां निम्नगायाश्च परिमलव्यत्ययात्तत्संबन्धः व्यज्यते ॥३५॥

आकीर्णमिति । घनारुणेन सान्द्रलोहितेन । विशेषणसमासः । बलरजसा सेनापरागेण आकीर्णं सपदि प्रक्षोभैः आलोडनैः तटेषु तीरेषु तरङ्गितं स[illegible] तरङ्गम् । तारकादित्वात् इतच् । यद्वा तरङ्गवत् कृतं [illegible]त् "तत्करोति" इति णिचि कर्मणि क्तः णाविष्ठवद्भा[illegible] । तथा मातङ्गैः उन्मथितानां क्षुभितानां [illegible]णुभिः पिङ्गं पिशङ्गम् अम्बु माञ्जिष्ठेन महारञ्जने[illegible] माञ्जिष्ठं वसनम् इव निर्बभासे । "तेन रक्तम्" [illegible] । "माञ्जिष्ठम्" इत्यत्र "कौशेयम्" इति वा पाठः [illegible] कोशशब्दात् ठक् । "कौशेयं कृमिकोशोत्थम्" इत्यमरः ॥

श्रीमद्भिरिति । श्रीमद्भिः [illegible]भावद्भिः नियमिताः

निःशेषं प्रशमितरेणु वारणानां
स्रोतोभिर्मदजलमुज्झतामजस्रम् ।
आमोदं व्यवहितभूरिपुष्पगन्धः
भिन्नैलासुरभिमुवाह गन्धवाहः ॥३८॥
साहश्यं दधति गभीरमेघघोषैः
उन्निद्रक्षुभितमृगाधिपश्रुतानि ।

कन्धराः अपरान्ताः चरमपादाग्राणि च येषां तैः । "अपरः पश्चिमः पादः" इति वैजयन्ती । ... साङ्कहारं साङ्ग-विक्षेपं यथा तथा संसक्तैः निः... ...तानि मदाम्बूनि येषां तैः गजेन्द्रैः प्रस्यन्दिनः ... ये गण्ड-शैलाः च्युतोपलाः तेषां श्रो... ... कर्मणि लिट् । "गण्डशैलास्तु च्युताः स्थूलो..." ...त्यमरः । अत्र अन्यस्य अन्यशोभाप्राप्त्यसम्भवात् तत्... ...। इति प्रतिबिम्बत्वा-क्षेपात् निदर्शनालङ्कारः ॥३...

निःशेषमिति । गन्धं वह... ... वायुः । कर्मणि अण् । निःशेषं यथा तथा ... येन तत् मदजलं स्रोतोभिः मदधाराभिः अ... ...वर्षतां वारणानां सम्बन्धि... व्यवहितः तिरस्कृतः ...बहुलः पुष्पगन्धः येन सः भिन्ना फुल्लाः एलाः लताविशेषाः ... ...का चन्द्रबालैला" इत्यमरः । ...तत्पुष्पाणि च ... "...णि जालीप्रभृतयः स्त्रियां ... फले" इत्यमरः ... सुरभिं सुगन्धिं घ्राणेन्द्रिय... इत्युपमा । ... ...सितम् उवाह वहति ... ॥

सा... ... गभीरैः मे... ...गर्जितैः साहश्यं

आतेनुश्चकितचकोरनीलकण्ठान्
कच्छान्तानमरमहेभबृंहितानि ॥३९॥
शाखावसक्तकमनीयपरिच्छदानाम्
अध्वश्रमातुरवधूजनसेवितानाम्।
जज्ञे निवेशनविभागपरिष्कृतानां
लक्ष्मीः पुरोपवनजा वनपादपानाम् ॥४०॥

इति श्रीमहामहोपाध्यायभारविकृतौ किराता-
र्जुनीये महाकाव्ये सप्तमः सर्गः ॥७॥

दधति इत्युपमा। दधातेः शतृप्रत्ययः "वा नपुंसकस्य" इति नुमभावः। उन्निद्राः बृंहितश्रवणात् एव प्रबुद्धाः चुभिताः संरब्धाश्च ये मृगाधिपाः तैः श्रुतानि आकर्णितानि न तु प्रबुद्धान् इति भावः। अमरमहेभबृंहितानि महान्तश्च ते इभाः गजाश्च इति महेभाः अमराणां महेभाः तेषां बृंहितानि गर्जितानि कच्छान्तान् अनूपप्रदेशान्। "जलप्रायमनूपं स्यात् पुंसि कच्छस्तथाविधः" इत्यमरः। चकिताः गर्जितशङ्कया सम्भ्रान्ताः चकोराः पक्षिविशेषाः नीलकण्ठाः मयूराश्च येषु तान् तथाभूतान् आतेनुः। भ्रान्तिमदलङ्कारः ॥३९॥

शाखेति। परिच्छाद्यते अनेन इति परिच्छदः परिकरः वसनाभरणादिः। "पुंसि संज्ञायां घः प्रायेण" इति घप्रत्यय "छादेर्घे पद्युपसर्गस्य" इति ह्रस्वत्वम्। शाखासु अवसक्ताः कमनीयाः परिच्छदाः येषां तेषाम् अध्वनि श्रमः तेन आतुरैः पीड़ितैः वधूजनैः सेवितानां निवेशनविभागैः आवसतिकावच्छेदैः परिष्कृतानाम् अलङ्कृतानाम्। "संपर्युपेभ्यः" इत्या

## अष्टमः सर्गः

—*—

अथ स्वमायाकृतमन्दिरोज्ज्वलं
ज्वलन्मणि व्योमसदां सनातनम्।
सुराङ्गना गोपतिचापगोपुरं
पुरं वनानां विजिहीर्षया जहुः ॥१॥

दिना सुट्। वनपादपानाम् अरण्यवृक्षाणाम् पुरे यत् उपवन कृत्रिमवनं तत्र जाता पुरोपवनजा लक्ष्मीः शोभा जज्ञे जाता। अत्र अन्योन्यलक्ष्मीसम्बन्धासम्भवात् तत्सदृशी इति सादृश्याक्षेपात् असम्भवे तद्वस्तुसम्बन्धा इयं निदर्शना। वसन्ततिलकावृत्तम्। "उक्ता वसन्ततिलका तभजा जगौ गः" इति लक्षणात् ॥४०॥

इति श्रीमन्महामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
किरातार्जुनीयव्याख्यायां घण्टापथसमाख्यायां
सप्तमः सर्गः।

———

अथेति। अथ निवेशनानन्तरं सुराङ्गनाः अप्सरसः स्वमायया स्वेच्छाविशेषेण कृतैः निर्मितैः मन्दिरैः उज्ज्वलं दीप्तं ज्वलन्तः [illegible] यस्मिन् तत् व्योमसदां गन्धर्वाणां सनातनं सदा [illegible] "[illegible]ायं चिरम्" इत्यादिना भावार्थे ट्युप्रत्ययः। गो[illegible]िः इन्द्रः तच्चापवर्णानि गोपुराणि यस्य तत् त[illegible]पमा। पुरं नगरं वनानां विजिहीर्षया वनानि विह[illegible]। कर्मणि षष्ठी। जहुः तत्यजुः। जहातेर्लिट्।

यथायथं ताः सहिता नभश्चरैः
प्रभाभिरुद्भासितशैलवीरुधः ।
वनं विशन्त्यो वनजायतेक्षणाः
क्षणद्युतीनां दधुरेकरूपताम् ॥ २ ॥

निवृत्तवृत्तोरुपयोधरक्लमः
प्रवृत्तनिर्ह्रादिविभूषणारवः ।
नितम्बिनीनां भृशमादधे धृतिं
नभःप्रयाणादवनौ परिक्रमः ॥ ३ ॥

अत्र ज्वलं ज्वलत् इति पुरं पुरम् इति च असकृद्व्यञ्जनद्वया-वृत्त्या छेकानुप्रासः। अन्यत्र तद्वैपरीत्या वृत्त्यनुप्रासः इति तयोः उपमायाश्च संसृष्टिः। अस्मिन् सर्गे वंशस्थं वृत्तम्। "जतौ तु वंशस्थमुदीरितं जरौ" इति लक्षणात् ॥ १ ॥

यथायथमिति। यथायथं यथास्वं स्वकीयम् अनतिक्रम्य इत्यर्थः। "यथास्वं तु यथायथम्" इत्यमरः। नपुंसकत्वात् ह्रस्वत्वम्। नभश्चरैः गन्धर्वैः मेघैश्च सहिताः प्रभाभिः स्वदीप्तिभिः उद्भासिताः शैलवीरुधः याभिः ताः पूर्वोक्ताः वनजायतेक्षणाः पद्मलोचनाः स्त्रियः वनं विशन्त्यः क्षणं द्युतिः यासां तासां क्षणद्युतीनां विद्युताम् एकरूपतां समानरूपतां दधुः। मुहुः द्रुमान्तराले तासां स्फुरणस्य क्षणिकत्वात् इति भावः। श्लेषानुप्राणिता इयम् उपमा श्लेषत्वम् इति केचित्। उभयथा अपि अनुप्रासेन संसर्गः ॥ २ ॥

निवृत्तेति। निवृत्तः गतः वृत्तस्य वर्त्तुलस्य उरुपयोधरस्य क्लमः यस्मिन् सः पादप्रक्षेपेषु विश्रान्तिसम्भवात् इति भावः।

घनानि कामं कुसुमानि बिभ्रतः
करप्रचेयान्यपहाय शाखिनः।
पुरोऽभिसस्रे सुरसुन्दरीजनै-
र्यथोत्तरेच्छा हि गुणेषु कामिनः॥ ४॥

तनूरलक्तारुणपाणिपल्लवाः
स्फुरन्नखांशूत्करमञ्जरीभृतः।
विलासिनीबाहुलता वनालयः
विलेपनामोदहृताः सिषेविरे॥ ५॥

किञ्च प्रवृत्तः जातः निक्वणादिविभूषणानां नूपुरादीनाम् आरवः यस्मिन् सः। अवनौ पृथिव्यां परिक्रमः सञ्चारः नितम्बिनीनां नभःप्रयाणात् भृशम् अधिकम्। "पञ्चमी विभक्ते" इति पञ्चमी। धृतिं सन्तोषम् आदधे। अत्र विशिष्टपरिक्रमस्य धृत्या दानहेतुत्वात् काव्यलिङ्गम् अलङ्कारः॥ ३॥

घनानीति। घनानि सान्द्राणि न तु विरलानि करप्रचेयानि हस्तग्राह्याणि अनुच्चानि। "हस्ताधिकार्थवचने" इति तृतीयासमासः। कामं कुसुमानि बिभ्रतः नवकुसुमितान्। शाखिनः तरून् अपहाय सुरसुन्दरीजनैः पुरः अग्रे अभिसस्रे अभिगतम्। भावे लिट्। तथाहि। कामिनः गुणेषु अति- शयेषु विषये उत्तरम् उत्तरम्। वीप्सार्थे अव्ययीभावः। यथो- त्तरम् इच्छा येषां ते यथोत्तरेच्छाः उत्तरोत्तराभिलाषुकाः हि। अत्र परिकराख्य [illegible] अर्थान्तरन्यासः अलङ्कारः॥ ४॥

तनूरिति। [illegible] आकृष्टाः वनालयः वन- भृङ्गाः तनूः कृशाः [illegible] अरुणाः [illegible] एव पल्लवाः यासां ताः स्फुरन्तः नखांशूनाम उत्कर [illegible] एव मञ्जरीः ताः

निपीयमानस्तवका शिलीमुखैः
अशोकयष्टिश्चलबालपल्लवा ।
विडम्बयन्ती ददृशे वधूजनैः
अमन्ददष्टौष्ठकरावधूननम् ॥ ६ ॥
करौ धुनाना नवपल्लवाकृती
वृथा कृथा मानिनि ! मा परिश्रमम् ।

शिश्लिषुरिति तथोक्ताः । क्विप् । विलासिनीनां बाहवः एव लताः ताः सिषेविरे । अत्र समस्तवस्तुविषयरूपकालङ्कारः बाह्ववयवानां लतावयवानां पल्लवादीनाम् अपि निरूपणात् इति ॥ ५ ॥

निपीयमानेति । शिलीमुखैः अलिभिः । "अलिबाणौ शिलीमुखौ" इत्यमरः । निपीयमानः स्तवकः गुच्छः यस्याः सा चलाः बालपल्लवाः यस्याः सा अत एव अमन्दं दृढं दष्टः ओष्ठः यस्मिन् तत् करावधूननं करकम्पनं तत् विडम्बयन्ती । स्तवकपानेन ओष्ठदंशनं पल्लवचलनेन करावधूननं च अनुकुर्वती इत्यर्थः । धूञः ण्यन्तात् ल्युट् । णिचि धूञ्प्रीञो नुक् वक्तव्यः । अशोकयष्टिः अशोकशाखा इत्यर्थः वधूजनैः ददृशे दृष्टा । अत्र विडम्बयन्ती इति प्रस्तुताशोकशाखाविभूषणभूतोपमामहिम्ना अप्रस्तुतनायिकाप्रतीतेः समासोक्तिः उत्तिष्ठमानया एव उपमया अङ्गाङ्गिभावेन सङ्कीर्य्यते ॥ ६ ॥

अथ काचित् मधुकराक्रान्तां काञ्चित् आह । कराविति । मानपरिहारेण मधुपाश्रयणे तु न कश्चित् बाधः इति आशयेन सम्बोधयति हे मानिनीति । नवपल्लवस्य आकृतिः इव आकृतिः ययोः इत्युपमा तौ करौ धुनाना । धूञः कर्त्तरि लटः

उपेयुषी कल्पलताभिशङ्कया,
कथं न्वितस्त्रस्यति षट्पदावलिः ॥७॥
जहीहि कोपं दयितोऽनुगम्यताम्
पुरोऽनुशेते तव चञ्चलं मनः।
इति प्रियं काश्चिदुपैतुमिच्छतीं
पुरोऽनुनिन्ये निपुणः सखीजनः ॥ ८ ॥

शानच्। वृथा व्यर्थं परिश्रमं मा कृथाः मा कुरुष्व। करोतेः आशीरर्थे माङि लुङ्। वृथात्वे कारणम् आह। कल्पलताभिशङ्कया कल्पवल्लीभ्रमेण इति भ्रान्तिमदलङ्कारः। उपेयुषी उपगता षट्पदावलिः कथं नु इतः ... त बिभेति न त्रस्यति एव इत्यर्थः। "वा भ्राश" इत्यादि ... विकल्पेन श्यन्प्रत्ययः। अत्र कान्तापरिश्रमवैयर्थ्यरूपकार्यस्य षट्पदावलेः कल्पवल्लीभ्रमनिबन्धनविश्वासरूपकारणस्य ... तु कारणेन कार्य्यसमर्थनरूपः अर्थान्तरन्यासः भ्रान्तिमता अङ्गाङ्गिभावेन सङ्कीर्णः सन् उपमया संसृज्यते ॥ ७ ॥

अथ काचित् सखी काञ्चित् प्रणयकुपिताम् आह। जहीहीति। प्रियम् उपैतुं स्वयम् एव अनुसर्त्तुम् इच्छतीम्। "आच्छीनद्योर्नुम्" इति विकल्पात् नुमभावः। काञ्चित् नायिकां निपुणः चित्तज्ञः सखीजनः कोपं जहीहि त्यज। "आ च हौ" इति विकल्पात् इकारादेशः। दयितः अनुगम्यताम् अनुस्रियताम्। उभयथा अपि प्रार्थनायां लोट्। अन्यथा चञ्चलम् अस्थिरं तव मनः पुरः अनुशेते अग्रे अनुशयिष्यते अनुतप्स्यते इत्यर्थः। "यावत् पुरानिपातयोर्लट्" इति लट्। इति अनेन प्रकारेण पुरः पूर्वम् एव अनुनिन्ये प्रसादयामास ॥८॥

समुन्नतैः काशदुकूलशालिभिः
परिक्वणत्सारसपङ्क्तिमेखलैः ।
प्रतीरदेशैः स्वकलत्रचारुभिः
विभूषिताः कुञ्जसमुद्रयोषितः ॥ ९ ॥

विदूरपातेन भिदामुपेयुषः
च्युताः प्रवाहादभितः प्रसारिणः ।
प्रियाङ्कशीताः शुचिमौक्तिकत्विषः
वनप्रहासा इव वारिविन्दवः ॥ १० ॥

सखीजनं प्रेम गुरूकृतादरं

अथ चतुर्भिः श्लोकैः कलापम् आह । समुन्नतैरिति । समुन्नतैः काशानि अश्ववालकुसुमानि तानि दुकूलानि इव तैः शालन्त इति तथोक्तैः सारसपङ्क्तयः मेखला: इव ताः परिक्वणन्त्यः येषु तैः स्वेषां कलत्राणि श्रोण्यः तद्वत् चारवः तैः । "कलत्रं श्रोणिभार्ययोः" इत्यमरः । प्रतीरदेशैः विभूषिताः तटप्रदेशैः भूषिताः कुञ्जसमुद्रयोषितः वननद्यः इत्यर्थः । अत्र तीरादीनां कलत्राद्यौपम्योपमेयत्वात् योषिच्छब्दसामर्थ्यात् न नदीनां योषिदौपम्यं गम्यते ॥९॥

विदूरेति । विदूरपातेन भिदां भेदम् । "षिद्भिदादिभ्योऽङ्" । उपेयुषः उपगतात् प्रवाहात् च्युताः अत एव अभितः प्रसारिणः प्रसर्पन्तः इति प्रियायाः अङ्कः उत्सङ्गः इव शीताः शीतलाः शुचीनां मौक्तिकानां त्विषः इव त्विषः येषां ते । किञ्च वनस्य प्रहासाः इव स्थिताः इत्युत्प्रेक्षा । वारिविन्दवश्च उपमयोः उभयोः उत्प्रेक्षायाश्च संसृष्टिः ॥१०॥

निरीच्यमाणा इव नम्रमूर्त्तयः।
स्थिरद्विरेफाञ्जनशारितोदरैः
विसारिभिः पुष्पविलोचनैर्लताः ॥ ११ ॥
उपेयुषीणां बृहतीरधित्यका
मनांसि जह्रुः सुरराजयोषिताम्।
कपोलकाषैः करिणां मदारुणैः
उपाहितश्यामरुचश्च चन्दनाः ॥ १२ ॥
॥ कलापकम् ॥

सखीति। द्वौ रेफौ वर्णविशेषौ येषां ते द्विरेफाः भ्रमरशब्दे न तदर्थः लक्ष्यते। "द्व्यचरं मासमिति विदधाति" इति भाष्यकारः। स्थिराः निश्चलाः द्विरेफाः एव अञ्जनानि तैः शारितानि शवलीकृतानि उदराणि येषां तैः। "शारः शबलवातयोः" इति विश्वः। विसारिभिः विस्तृतैः पुष्पाणि एव विलोचनानि तैः प्रेम्णा गुरूकृतः आदरो यस्मिन् कर्मणि तत्। तथा सखीजनं निरीच्यमाणाः पश्यन्तः इव स्थिताः। कुतः नम्रमूर्त्तयः अवनताङ्गः लताश्च। अत्र रूपकोत्प्रेचयोः सङ्करः॥११॥

उपेयुषीणामिति। मदेन अरुणैः अव्यक्तरागैः। "अव्यक्तरागस्त्वरुणः" इत्यमरः। करिणां कपोलानां काषैः कषणैः उपाहितश्यामरुचः जनितकृष्णवर्णाः इति तद्गुणालङ्कारः। चन्दनाः मलयजाः। "गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम्" इत्यमरः। बृहतीः अधित्यकाः ऊर्द्ध्वभूमीः उपेयुषीणां सुरराजयोषितां मनांसि जह्रुः। अत्र ऋतुःश्लोका नद्यादीनां

प्रस्थिताभिरधिनाथनिवासं
ध्वंसितप्रियसखीवचनाभिः ।
मानिनीभिरपहस्तितधैर्य्यः
सादयन्नपि मदोऽवललम्बे ॥ ३६ ॥

कान्तवेश्म बहु सन्दिशतीभिः
यातमेव रतये रमणीभिः ।
मन्मथेन परिलुप्तमतीनां
प्रायशः स्खलितमप्युपकारि ॥ ३७ ॥

मनोहरत्वं रुचिकरत्वम् इति यावत् उपधत्ते आधत्ते। तद-भावात् अरुचिः युक्ता एव इत्यर्थः। अत एव वैधर्म्यात् कारणेन कार्य्यसमर्थनरूपः अर्थान्तरन्यासः। रम्यन्ते एषु इति रम्याणि। "पोरदुपधात्" इति यत्प्रत्ययः। "कृत्यल्युटो बहुलम्" इति बहुलग्रहणात् अधिकरणार्थः ॥३५॥

प्रस्थिताभिरिति। अधिनाथनिवासं प्रियगृहं प्रति प्रस्थिताभिः प्रचलिताभिः ध्वंसितानि खण्डितानि प्रियसखीवचनानि स्वयं प्रस्थानं लाघवाय इति एवंरूपाणि याभिः ताभिः मानिनीभिः कोपनाभिः। "स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये" इति लक्षणात्। अपहस्तितं निरस्तं धैर्य्यं येन सः। तथा सादयन् मानं शरीरं च कर्षयन् अपि मदोषः अपि इत्यर्थः मदः अवललम्बे स्वीकृतः अज्ञानव्याजेन लाघवापह्नवसौकर्य्यात् इति भावः ॥३६॥

कान्तेति। रतये सुरताय बहु सन्दिशतीभिः अनेकं वाचिकं कथयन्तीभिः सन्देशव्यसनात् गन्तव्यम् अपि अज्ञान-

आशु कान्तमभिसारितवत्याः
योषितः पुलकरुद्धकपोलम् ।
निर्जिगाय मुखमिन्दुमखण्डं
खण्डपत्रतिलकाकृति कान्त्या ॥ ३८ ॥

उच्यतां स वचनीयमशेषं
नेश्वरे परुषता सखि ! साध्वी ।
आनयैनमनुनीय कथं वा
विप्रियाणि जनयन्ननुनेयः ॥ ३९ ॥

तीभिः इत्यर्थः । रमणीभिः कान्तवेश्म यातं प्राप्तम् एव न तु मार्गात् मध्ये निवृत्तम् इत्यर्थः । तथाहि । मन्मथेन परिलुप्तमतीनां भ्रष्टमतीनां स्खलितं विरुद्धाचरणम् अपि प्रायशः उपकारि भवति ।३७॥

आश्विति । आशु कान्तम् अभिसारितवत्याः अभिगतवत्याः । स्वार्थे णिच् । योषितः सम्बन्धि पुलकैः रुद्धौ आवृतौ कपोलौ यस्य तत् खण्डा प्रमृष्टा पत्राणां पत्रलेखानां तिलकस्य च आकृतिः सन्निवेशः यस्य तत् तथोक्तं मुखं कान्त्या अखण्डं पूर्णम् इन्दुं निर्जिगाय जयति स्म । इति आर्थी इयम् उपमा । "जयति द्वेष्टि" इति दण्डिना सादृश्यार्थेषु गणनात् ॥३८॥

अथ युग्मेन सखीनायिकासंवादम् आह । उच्यतामिति । तत्र नायिका आह । सः धूर्त्तः अशेषम् अखिलं वचनीयं वक्तव्यम् उच्यतां निःशङ्कम् उपालभ्यताम् इत्यर्थः । "ब्रूञो दुहादित्वात् अप्रधाने कर्मणि लोट्"। अथ सखी आह । हे सखि ।

**किं गतेन न हि युक्तमुपैतुं**
**कः प्रिये सुभगमानिनि! मानः।**
**योषितामिति कथासु समेतैः**
**कामिभिर्बहुरसा धृतिरूहे ॥ ४० ॥**

**॥ युग्मम् ॥**

ईश्वरे भर्त्तरि नायके विषये परुषता पारुष्यं न साध्वी न हिता। अथ नायिका आह। हे सखि! तर्हि एनम् अननीय सान्त्वयित्वा आनय। पुनः सखी आह। विप्रियाणि जनयन् अप्रियाणि कुर्वन् सः कथं वा अनुनेयः अननयार्हः ॥३८॥

किमिति। पुनः नायिका आह। तर्हि गतेन तं प्रति गमनेन किं कः अर्थः इत्यर्थः। कुतः? उपैतुं गन्तुं न युक्तं हि। पुनः सखी आह। हे सुभगमानिनि! सौन्दर्य्यमानिनि सुभगम् आत्मानं मन्यते इति। "आत्ममाने खश्च" इति चकारात् णिनिप्रत्ययः। तस्मिन् प्रिये विषये कः मानः मानः न कर्त्तव्यः इत्यर्थः। यद्वा न हि इत्यादि सखीवाक्यम्। तत्र न हि इत्येकं वाक्यं तद्युक्तं न हि इत्यर्थः। हे सखि! किन्तु उपैतुं युक्तं कुतः? सुभगमानिनि! प्रियः कः मानः तादृगजनस्य दुर्लभत्वात् इति भावः। इत्येवंरूपासु योषितां कथासु विषये समेतैः समीपम् आगत्य आकर्णयद्भिः इत्यर्थः। कामिभिः बहुरसा अनेकस्वादा धृतिः सन्तोषः ऊहे ऊढ़ा। अत्र रौच्योत्सुक्यनिर्वेदाद्यनेकभावशावल्यपरिपूर्णकान्ताकथाकर्णनात् उत्तरोत्तरम् अपूर्वहृदयानन्दनिष्यन्दम् आनन्दसन्दोहम् अविन्दन् इत्यर्थः। प्रायेण अत्र प्रौढाः कलहान्तरिताश्च नायिकाः ॥४०॥

योषितः पुलकरोधि दधत्याः
घर्मवारि नवसङ्गमजन्म ।
कान्तवक्षसि बभूव पतन्त्याः
मण्डनं लुलितमण्डनतैव ॥ ४१ ॥

सीधुपानविधुरासु निगृह्णन्
मानमाशु शिथिलीकृतलज्जः ।
सङ्गतासु दयितैरुपलेभे
कामिनीषु मदनो नु मदो नु ॥ ४२ ॥

द्वारि चक्षुरधिपाणि कपोलौ
जीवितं त्वयि कुतः कलहोऽस्याः ।

योषित इति । पुलकरोधि रोमाञ्चव्यापि नवसङ्गमेन जन्म यस्य तत् घर्मवारि स्वेदोदकं दधत्याः इति सात्त्विकोक्तिः कान्तवक्षसि पतन्त्याः इति औत्सुक्योक्तिः । योषितः या लुलितमण्डनता उत्कृष्टप्रसाधनत्वम् । भावे तल् । सा एव मण्डनं बभूव । तादृशफलत्वात् तस्य इति भावः ॥४१॥

सीध्विति । शिध्यते अनेन इति शीधु पक्वेक्षुरसविकारः मद्यविशेषः तस्य पानेन विधुरासु विमूढासु तथा दयितैः सङ्गतासु स्वयं प्राप्तासु च कामिनीषु अतिमानवतीषु आशु मानं कोपं निगृह्णन् निवर्त्तयन् शिथिलीकृता लज्जा येन सः मदनः नु मदः नु उपलेभे लभ्यते स्म इत्यर्थः । प्रियसमागमशीधु-पानरूपोभयकारणासङ्गात् उभयथा माननिग्रहाद्यनुभाव-साधारण्यात् च सन्देहः सः एव अलङ्कारः ॥४२॥

द्वारीति । द्वारि त्वदागमनमार्गे एव चक्षुः इति औत्सु-

कामिनामिति वचः पुनरुक्तं
प्रीतये नवनवत्वमियाय ॥ ४३ ॥
साचि लोचनयुगं नमयन्ती
रुन्धती दयितवक्षसि पातम् ।
सुभ्रुवो जनयति स्म विभूषां
सङ्गतावुपरराम च लज्जा ॥ ४४ ॥
सव्यलीकमवधीरितखिन्नं
प्रस्थितं सपदि कोपपदेन ।

स्योक्तिः । अधिपाणि पाणौ करे कपोलौ इति चिन्तोक्तिः किं बहुना जीवितं त्वयि त्वदधीनं त्वां विना न जीवति इत्यर्थः । इति गाढानुरागोक्तिः । अतः अस्याः कलहः विग्रहः कृतः ? इत्येवं कामिनीनां प्रीतये पुनः उक्तं पुनःपुनः उच्यमानं वचः दूतीवाक्यं नवनवत्वं नवप्रकारत्वम् अपूर्ववद्भावम् इयाय । प्रकारार्थे द्विर्भावः कर्मधारयवद्भावात् सुपः लुक् । कान्तानुरागप्रकटनात् कामिनः प्रहृष्यन्ति इति भावः । कलहान्तरिता इयम् ॥४३॥

साचीति । लोचनयुगं साचि तिर्य्यक् नमयन्ती प्रिये तिर्यक् पातयन्ती न तु क्रिया इत्यर्थः । दयितवक्षसि पातं रुन्धती इष्टम् अपि प्रतिबध्नती लज्जा सुभ्रुवः नायिकायाः विभूषां शोभां जनयति स्म । सङ्गतौ सुरतप्रसङ्गे सति उपरराम च । एवं यतः तदा न दूषणम् एव इति भावः । "विभाषाकर्मकात्" इति परस्मैपदम् ॥४४॥

सव्यलीकमिति । सव्यलीकं सापराधम् अत एव अवधी-

योषितः सुहृदिव स्म रुणद्धि
प्राणनाथमभिवाष्पनिपातः ॥ ४५ ॥
शङ्किताय कृतवाष्पनिपाताम्
ईर्ष्यया विमुखितां दयिताय।
मानिनीमभिमुखाहितचित्तां
शंसति स्म घनरोमविभेदः ॥ ४६ ॥
लोलदृष्टि वदनं दयितायाः
चुम्बति प्रियतमे रभसेन।

ितः अवज्ञातः सन् खिन्नः तम्। "पूर्वकाल" इत्यादिना तत् रूपः। सपदि कोपस्य पदेन व्याजेन प्रस्थितं निर्गच्छन्तं प्राणनाथं प्रियं योषितः सम्बन्धि अभिवाष्पनिपातः आभि मुख्येन अश्रुमोचः सुहृत् इव रुणद्धि स्म रुरोध। वाष्पपातस्य मन्युमोचलिङ्गतया प्रस्थानप्रतिबन्धकत्वात् सुहृदौपम्यम्। इयम अधीरा खण्डिता। "ज्ञातेऽन्यासङ्गिनि पत्यौ खण्डितेर्ष्या-कषायिता। अधीरास्रु विमुञ्चन्ती विज्ञेया चात्र नायिका॥ इति दशरूपके ॥४५॥

शङ्कितायेति। शङ्किताय नायकाय अविश्वस्ताय दयिताय ईर्ष्यया। विमुखितां विमुखीकृताम् अत एव कृतवाष्पनिपातां मानिनीं घनरोमविभेदः सान्द्रपुलकोदयः अभिमुखम् आहितं चित्तं यया तां निष्कोपाम् इत्यर्थः। शंसति स्म व्यनक्ति स्म इत्यर्थः। अन्य । सात्त्विकानुदयात् इति भावः। अत्र अपि पूर्वोक्ता एव ना ाका ॥४६॥

अथ सम्भोगशृङ्गारम् आह। स आन्तरः बाह्यश्च तत्र बाह्य-

व्रीडया सह विनीवि नितम्बात्
अंशुकं शिथिलतामुपपेदे ॥ ४७ ॥
क्लीतया गलितनीवि निरस्यन्
अन्तरीयमवलम्बितकाञ्चि ।
मण्डलीकृतपृथुस्तनभारं
सस्वजे दयितया हृदयेशः ॥ ४८ ॥
आहता नखपदैः परिरम्भाः

रतम् आह। लोलेति। प्रियतमे लोलदृष्टि चञ्चलेक्षणं दयितायाः वदनं रभसेन बलात्कारेण चुम्बति सति विनीवि निर्गतबन्धनम् अंशुकं नितम्बाद् व्रीडया सह शिथिलताम् उपपेदे उभयम् अपि शिथिलम् आसीत् इत्यर्थः। अत्र व्रीडांशुकरूपसम्बन्धिभेदभिन्नवृत्तिस्रंसनरूपशैथिल्यस्य अभेदाध्यवसायनिबन्धनातिशयोक्तिमूलसहोक्तिविशेषः अलङ्कारः। अत एव व्रीडांशुकौपम्यञ्च कल्प्यम्। अत्र वात्स्यायनः—"बाह्यमाभ्यन्तरं चेति द्विविधं रतमुच्यते। तत्राद्यं चुम्बनाश्लेषनखदन्तक्षतादिकम्; द्वितीयं सुरतं साक्षान्नानाकारेण कल्पितम् ॥४७॥

क्लीतयेति। गलितनीवि गलितबन्धनं तथापि अवलम्बिता काञ्ची येन तत् काञ्चीलग्नम् इत्यर्थः। तदन्तरीयम् अधोऽंशुकम्। "अन्तरीयोपसंव्यानपरिधानान्यधोऽंशुके" इत्यमरः। निरस्यन् आक्षिपन् हृदयेशः प्रियः क्लीतया वस्त्रापगमात् लज्जितया। ह्रीधातोः कर्त्तरि क्तः। दयितया मण्डलीकृतः वर्त्तुलीकृतः पृथुः स्तनभारः यस्मिन् कर्मणि तत् यथा तथा गाढम् इत्यर्थः। सस्वजे आश्लिष्टः प्रियदृष्टैः प्रतिबन्धार्थम् इत्यर्थः ॥४८॥

चुम्बितानि घनदन्तनिपातैः ।
सौकुमार्य्यगुणसम्भृतकीर्त्तिः
वाम एव सुरतेष्वपि कामः ॥ ४९ ॥

पाणिपल्लवविधूननमन्तः
सीत्कृतानि नयनार्द्धनिमेषाः ।
योषितां रहसि गद्गदवाचाम्
अस्त्रतामुपययुर्मदनस्य ॥ ५० ॥

आहृता इति । परिरम्भाः आलिङ्गनानि नखपदैः हेतुभिः आहृताः अभिमताः । हेतौ इति तृतीया । तथा चुम्बनानि घनदन्तनिपातैः गाढ़दन्तक्षतैः हेतुभिः आहृतानि इति लिङ्गविपरिणामः । सुरतसुखोद्दीपकत्वात् नखदन्तक्षतपूर्वकेषु आलिङ्गनचुम्बनेषु आदरः संवृत्तः इत्यर्थः। ननु सुकुमारे कामतन्त्रे कथं पीड़ाकरेषु आदरः ? इति न वाच्यम् इति आह । सौकुमार्य्यम् एव गुणः तेन सम्भृतकीर्त्तिः लब्धयशाः कामः सुरतेषु सम्भोगेषु अपि न केवलं विप्रलम्भेषु इति भावः । वामः क्रूरः एव सुकुमारः कामः इति वादमात्रम् । वस्तुतस्तु पीड़यन् एव सुखम् आवहति इति भावः । सामान्येन विशेषसमर्थनरूपः अर्थान्तरन्यासः ॥४९॥

अथ आभ्यन्तरं रतम् आह । पाणीति । रहसि एकान्ते इति विस्रम्भातिशयोक्तिः गद्गदवाचां स्खलद्गिरां योषितां सम्बन्धीनि पाणिपल्लवयोः विधूननं कम्पनम् अन्तः सीत्कृतानि सीत्काराः । एतेन कुट्टमिताख्यः भावः उक्तः । "अधरपीड़नादौ सुखेऽपि दुःखवदुपचारः कुट्टमितम्" इति लक्षणात् । नयनानाम् अर्द्धनिमेषाः अर्द्धनिमीलितानि । रहसि एकान्ते

पातुमाहितरतीन्यभिलेषुः
तर्षयन्त्यपुनरुक्तरसानि ।
सस्मितानि वदनानि वधूनां
सोत्पलानि च मधूनि युवानः ॥ ५१ ॥
कान्तसङ्गमपराजितमन्यौ
वारुणीरसनशान्तविवादे ।

गद्गदवाचां योषितताम् इति विशेषणसामर्थ्यात् गद्गदवाक्च इति एतानि मदनस्य अस्त्रताम् उपययुः अस्त्रवत् पुंसाम् उद्दीपनानि आसन् इत्यर्थः । अत्र सीत्काराद्यनिमेषादिना मुग्धपारवश्यं व्यज्यते । तदुक्तं रतिरहस्ये ।"स्रस्तता वपुषि मीलनं दृशोर्मूर्च्छना च रतिलाभलक्षणम् । श्लेषयेत् स्वजघनं मुहुर्मुहुः सीत्करोति गतलज्जिताकुला" ॥ इति ॥५०॥

अथ मधुपानवर्णनम् आरभते । पातुमित्यादिना । युवान आहितरतीनि वर्द्धितरागाणि अत एव अपुनरुक्तरसानि पुनःपुनः पानेन अपि अपूर्वस्वादानि अत एव तर्षयन्ति तृष्णोत्पादकानि अतृप्तिकराणि इत्यर्थः । सस्मितानि वधूनां वदनानि सोत्पलानि मधूनि च पातुम् अभिलेषुः इच्छन्ति स्म । अत्र प्रस्तुतानाम् इव वदनानां मधूनां च पानक्रियौपम्यस्य गम्यत्वात् केवलं प्राकरणिकविषयतया तुल्ययोगितालङ्कारः ।"प्रस्तुतानां तथान्येषां केवलं तुल्यधर्मतः । औपम्यं गम्यते यत्र सा मता तुल्ययोगिता ॥" इति लक्षणात् ॥५१॥

कान्तेति । कान्तसङ्गमेन पराजितमन्यौ त्यक्तरोषे तदवधिकत्वात् तस्य इति भावः । किञ्च वारुणीरसनेन मध्वा

मानिनीजन उपाहितसन्धौ
सन्दधे धनुषि नेषुमनङ्गः ॥ ५२ ॥

कुप्यताशु भवतानतचित्ताः
कोपितांश्च वरिवस्यत यूनः
इत्यनेक उपदेश इव स्म
स्वाद्यते युवतिभिर्मधुवारः ॥ ५३ ॥

भर्तृभिः प्रणयसम्भ्रमदत्तां
वारुणीमतिरसां रसयित्वा ।

स्वादेन शान्तः विवादः वाक्कलहादिः यस्य तस्मिन् अतः उपाहितसन्धौ प्रियैः सह कृतसन्धाने मानिनीजने विषये अनङ्गः धनुषि इषु न सन्दधे सिद्धसाध्ये साधनवैयर्थ्यात् इति भावः ॥५२॥

कुप्यतेति। यूनः प्रियान् कुप्यत यूनां कोपं जनयत। "नाव क्रुधद्रुह" इत्यादिना यूनां सम्प्रदानत्वे चतुर्थी तस्य च प्रति कोपः इति नियमात् अत्र कोपस्तावत् कृत्रिमः इति। आशु आनतचित्ताः अनुकूलचित्ताः भवत। किञ्च कोपितान् वरिवस्यत परिचरत। "नमो वरिवश्चित्रङः क्यच्" इति क्यच। वरिवसः परिचर्य्यायाम् इत्यर्थे तस्य नियमस्य। इत्येवम् अनेकः अनेकप्रकारः यः उपदेशः प्रवर्त्तकवाक्यं सः इव मधुवारः मधुपानावृत्तिः। "मधुवारा मधुक्रमा" इत्यमरः। युवतिभिः स्वाद्यते स्म। मधुवारस्य कोपादिकार्य्यप्रवर्त्तकत्वसाम्यात् उपदेशः इव इति उत्प्रेक्षा। अनियताः खलु मत्तचेष्टाः इति भावः ॥५३॥

भर्त्तृभिरिति। भर्त्तृभिः प्रणयसंभ्रमाभ्यां प्रेमादराभ्यां

क्लीविमोहविरहादुपलेभे
पाटवं नु हृदयं नु वधूभिः ॥ ५४ ॥
स्वादितः स्वयमथैधितमानं
लम्भितः प्रियतमैः सह पीतः ।
आसवः प्रतिपदं प्रमदानां
नैकरूपरसतामिव भेजे ॥ ५५ ॥

दत्ताम् । "संभ्रमः साध्वसेऽपि स्यात् संवेगादरयोरपि" इति विश्वः। अत एव अतिरसाम् अधिकस्वादां वारुणीं वरुणात्मजाम् "सुरा हलिप्रिया हाला परिस्रुद्वरुणात्मजा" इत्यमरः। रमयित्वा आस्वाद्य वधूभिः क्लीविमोहविरहात् मदेन लज्जा जाड्यापगमात् हेतोः पाटवं नु हृदयं नु ज्ञानविशेषं नु उपलेभे ? अत एव हृदयस्य तत्कार्य्यज्ञानसामर्थ्यात् हृदयम् एव प्रागसत् पश्चात् लब्धम् इति सन्देहः। अन्यथा कथं प्रियं प्रति वक्रोक्त्याद्यर्थेषु प्रवृत्तिः ? इति भावः। सन्देहालङ्कारः ॥५४॥

स्वादित इति। स्वयं स्वादितः आदौ स्वयम् एव पीतः अथ अनन्तरं प्रियतमैः एधितमानं वर्द्धितबहुसम्मानं यथा तथा लम्भितः ग्राहितः स्वहस्तेन प्रापितः इत्यर्थः। ततः प्रियतमैः सह पीतः युगपदेकपात्रेण पीतः इत्यर्थः। आसवः प्रमदानां प्रतिपदं प्रतिक्षणं न एकरूपरसताम् अनेकविधस्वादुत्वम्। नञर्थस्य नशब्दस्य सुप्सुपा इति समासः। नञ्समासे नलोपः स्यात्। भेजे इव प्राप इव। प्रायेण उपचारविशेषात् भोज्ये एरसविशेषः स्यात् इति भावः। आस्वादनादिपदार्थानाम् अनेकरसताप्राप्तिहेतुत्वात् काव्यलिङ्गं तावत् एकं स्वादनादीनाम् अनेकधर्माणाम् एकस्मिन् एव सर्वक्रमेण सम्बन्धात् पर्याय

भ्रूविलाससुभगाननुकर्त्तुं
विभ्रमानिव वधूनयनानाम्।
आददे मृदुविलोलपलाशैः
उत्पलैश्चषकवीचिषु कम्पः ॥ ५६ ॥

ओष्ठपल्लवविदंशरुचीनां
हृद्यतामुपययौ रमणानाम्।
फुल्ललोचनविलोलसरोजैः
अङ्गनास्यचषकैर्मधुवारः ॥ ५७ ॥

भेदश्च तयोश्च संसृष्टयोः अनेकरसत्वोत्प्रेक्षावीजत्वात् तया सह अङ्गाङ्गिभावेन सङ्करः ॥५५॥

भ्रूविलासेति। भ्रूविलासैः सुभगान् सुन्दरान् वधूनयनानां विभ्रमान् अनुकर्त्तुं तैः आत्मानं समीकर्त्तुम् इव इति फलोत्प्रेक्षा। मृदुविलोलपलाशैः ईषच्चञ्चलदलैः उत्पलैः चषकेषु याः वीचयः मधुमयः तासु यः कम्पः सः आददे स्वीकृतः न तु स्वकम्पः तस्य विलोलविशेषणेन एव उक्तत्वात् तत्स्वीकारश्च तद्योग एव। पूर्वं नेत्रमात्रसाम्यभाजाम् उत्पलानां कम्पमानवीचियोगात् सभ्रूविलासनेत्रसाम्यं जातम् इत्यर्थः ॥५६॥

ओष्ठेति। ओष्ठः एव पल्लवः तस्य विदंशे दंशने रुचिः अभिलाषः येषां तेषां मुखसुरापानमिषेण अधर पिपासतान् इत्यर्थः। रमणानां फुल्लानि लोचनानि एव विलोलसरोजानि येषु तैः अङ्गनास्यानि एव चषकाणि पानपात्राणि। "चषकोऽस्त्री पानपात्रम्" इत्यमरः। तैः मधुवारः मधुपानावृत्तिः हृद्यतां हृदयप्रियताम् उपययौ। "हृदयस्य प्रियः" इति यत्-

प्राप्यते गुणवतापि गुणानां
व्यक्तमाश्रयवशेन विशेषः।
तत्तथा हि दयिताननदत्तं
व्यानशे मधु रसातिशयेन॥ ५८॥

वीक्ष्य रत्नचषकेष्वतिरिक्तां
कान्तदन्तपदमण्डनलक्ष्मीम्।
जज्ञिरे बहुमताः प्रमदानाम्
ओष्ठयावकनुदो मधुवाराः॥ ५९॥

लोचनाधरकृताहृतरागा

प्रत्ययः। "हृदयस्य हृल्लेखयदण्लासेषु" इति हृद्भावः। रमण विशेषणार्थहेतुककाव्यलिङ्गसङ्कीर्णरूपकालङ्कारः॥५७॥

प्राप्यत इति। गुणवता अपि आश्रयवशेन गुणानां विशेषः प्रकर्षः प्राप्यते व्यक्तं तत् तथा यदुक्तं तथा एव इत्यर्थः। हि यस्मात् दयितायाः आननेन करणेन दत्तं मधु रसातिशयेन स्वादुप्रकर्षेण कर्त्रा व्यानशे व्याप्तम्। विशेषेण सामान्यसमर्थनरूपः अर्थान्तरन्यासः॥५८॥

वीक्ष्येति। रत्नचषकेषु स्फटिकादिमणिपात्रेषु अतिरिक्तां यावकापगमात् पूर्वाभ्यधिकां कान्तस्य यत् दन्तपदमण्डनं तस्य लक्ष्मीं शोभां प्रतिविम्बिताम् इति शेषः। वीक्ष्य ओष्ठयावकनुदः अधरलाक्षारागहारिणः मधुवाराः मधुपानभ्यासाः प्रमदानां बहुमताः अभिमताः। वर्त्तमाने क्तः तद्योगात् षष्ठी। जज्ञिरे जाताः तेषां प्रियानुरागचिह्नप्रकाशकत्वात् इति भावः॥५९॥

वासितानन विशेषितगन्धा।
वारुणी परगुणात्मगुणानां
व्यत्ययं विनिमयं नु वितेने ॥ ६० ॥

मधुपानात् विलोचनेषु रागोत्पत्तिः अधरेष्वश्च लाक्षाराग निवृत्तिः मध्वाननयोश्च अन्योन्यगन्धसंक्रान्तिः इति स्थिते सति उत्प्रेक्ष्यते। लोचनेति। लोचने च अधरश्च लोचनाधरम्। "ससद्वाद्वाड:" इति व्यभिचारज्ञापकात् न अत्र अधरशब्दस्य पूर्वनिपातः। कृतश्च असौ आहृतश्च इति विशेषणसमासः। लोचनाधरस्य कृताहृतः रागः यया सा तयोक्ता लोचनयोः कृतरागा अधरात् आसमन्तात् हृतरागा च इत्यर्थः। षष्ठ्याश्च अर्थसम्बन्धात् सामान्यस्य योग्यविशेषणपर्यवसाननियमेन अधिकरणापादानार्थयोः आक्षेपात्। तथा च अधरलोचनपरगुणयोः रागतद्विरहयोः स्थानविपरीतवृत्तिं कृतवती इत्यर्थः। तथा वासितेन स्वगन्धसंक्रान्तिसुरभितेन आननेन विशेषितः। अतिशायितः गन्धः यस्याः सा। यद्वा वासितानना च असौ अर्थात् आननेन एव विशेषितगन्धा च इति कृतबहुव्रीहि विशेषणसमासः। उभयथापि आननसंक्रान्तस्वगन्धा स्वसंक्रान्ताननगन्धा च इत्यर्थः। एवंभूता वारुणी मदिरा परगुणात्मगुणानां परयोः लोचनाधरयोः गुणौ च परस्य आननस्य गुणः आत्मनः वारुण्याः गुणश्च परगुणात्मगुणाः तेषां परगुणानाम् आत्मगुणानां व्यत्ययं नु विनिमयं नु वितेने विस्तारयामास। चित्तेन प्रामादिकी वस्तुपरिवृत्तिः व्यत्ययः। बुद्धिपूर्वा तु वस्तुपरिवृत्तिः विनिमयः। तन्त्रोच्चारितस्य परगुणशब्दस्य आवृत्त्या परगुणौ च परगुणात्मगुणौ च इति विग्रहः कथञ्चित् अगत्या सोढव्यः उपमानपूर्वपदबहुव्रीहिवत्। तथा च

तुल्यरूपमसितोत्पलमक्ष्णोः
कर्णगं निरुपकारि विदित्वा ।
योषितः सुहृदिव प्रविभेजे
लम्भितेक्षणरुचिर्मदरागः ॥ ६१ ॥
क्षीणयावकरसोऽप्यतिपानैः
कान्तदन्तपदलम्भितशोभः ।

अयम् अर्थः परगुणयोः अधरलोचनगुणयोः रागतद्विरहयोः व्यत्ययं नु विनिमयं नु वितेने ; तथा परगुणात्मगुणयोः आननगन्धात्मगन्धयोश्च व्यत्ययं नु विनिमयं नु वितेने ; अन्यथा कथम् अन्यस्मिन् अन्यधर्मोपलम्भः सम्भवति इति भावः। अत्र लोचनाधररागयोः तदभावयोः वा भेदे अपि अभेदाध्यवसायात् एकत्ववाचः युक्तिः तस्मात् तन्मूलातिशयोक्त्यनुप्राणिता च इयं व्यत्ययविनिमययोः अन्यतरकरणोत्प्रेक्षा इति संक्षेपः। सा च प्रतीयमाना व्यञ्जकाप्रयोगात्। नुशब्दस्तु संशये ॥ ६० ॥

तुल्येति। अक्ष्णोः तुल्यरूपम् अक्षितुल्याकृति योषितः कर्णगं कर्णावतंसीकृतम् असितोत्पलं निरुपकारि अनुपकारकं विदित्वा ज्ञात्वा तत्कार्य्यशोभायाः कर्णान्तविश्रान्तेन अक्ष्णा एव कृतत्वात् इति भावः। मदरागः सुहृत् इव उत्पलस्य बन्धुः इव अनिष्टवारकत्वात् इति भावः। लम्भितेक्षणरुचिः आहृतनयनकान्तिः सन् प्रविभेजे वर्णान्तरापादानेन प्रविभक्तवान्। अवैलक्षण्यकरात् अक्ष्णः व्यावर्त्तयामास ततः विच्छित्तिकरत्वात् इति भावः ॥ ६१ ॥

क्षीणेति। अतिपानैः क्षीणयावकरसः क्षीणलाक्षारागः

आययावतितरामिव बध्वाः
सान्द्रतामधरपल्लवरागः ॥ ६२ ॥
रागकान्तनयनेषु नितान्तं
विद्रुमारुणकपोलतलेषु ।
सर्वगापि ददृशे वनितानां
दर्पणेष्विव मुखेषु मदश्रीः ॥ ६३ ॥
बद्धकोपविकृतीरपि रामाः

अपि कान्तस्य दयितस्य दन्तपदेन दन्तक्षतेन सम्भृता शोभा यस्य सः बध्वा अधरपल्लवरागः अतितराम् अतिमात्रम्। अतिशब्दात् तरप्प्रत्यये "किमेत्तिङव्ययः" इत्यादिना आम्प्रत्ययः। "तद्धितश्चासर्वविभक्तिः" इति अव्ययसंज्ञा। सान्द्रतां घनत्वम्। आययौ इव प्रियोपभोगचिह्नमण्डितानां कामिन्यवयवानां किम् अन्यैः मण्डनैः? इति भावः। तत्र क्षीणस्य अपि सान्द्रता इति विरोधात् कान्तदन्तेत्यादिविशेषणगत्या सान्द्रत्वे हेतूक्त्या काव्यलिङ्गं तत्सङ्कीर्णा उत्प्रेक्षा ॥ ६२ ॥

रागेति। वनितानां सर्वगा अपि सर्वाङ्गगता अपि। "अन्यत्यन्त" इत्यादिना डः। मदश्रीः रागेण कान्तानि नयनानि येषु तेषु विद्रुमवत् अरुणानि कपोलतलानि येषु तेषु मुखेषु दर्पणेषु इव नितान्तं ददृशे तेषां, नयनादिनैर्मल्येन रागाभिव्यक्तिसम्भवात् इति भावः। अत्र मदश्रीः सर्वगता अपि मुखेषु एव ददृशे इति विरोधः तस्य मुखविशेषणैः समाधानात् काव्यलिङ्गानुप्राणितः विरोधवदाभासः अलङ्कारः। स च उपमया संसृज्यते ॥ ६३ ॥

बद्धेति। बद्धा कोपेन विकृतिः याभिः ताः तथाभूताः

चारुताभिमततामुपनिन्ये।
वश्यतां मधुमदो दयितानाम्
आत्मवर्गहितमिच्छति सर्वः॥ ६४॥
वाससां शिथिलतामुपनाभि
ह्रीनिरासमपदे कुपितानि।
योषितां विदधती गुणपक्षे
निर्ममार्ज मदिरा वचनीयम्॥ ६५॥
भर्त्तृषूपसखि निक्षिपतीनाम्

अपि रामा: कर्म्म चारुता तासां सौन्दर्य्यं कर्त्री अभिमततां प्रियवाल्लभ्यम् उपनिन्ये। सौन्दर्य्यं हि विकृतिम् अपि रोचयते इति भाव:। मधुमद: दयितानां वश्यतां विधेयत्वम् उपनिन्ये। तथाहि। सर्व: आत्मवर्गहितम् इच्छति अत: चारुता स्त्रीत्वात् स्त्रीणाम् उपचकार मधुमदस्तु पुंस्त्वात् पुंसाम् इति युक्तम् इत्यर्थ:। अत्र विकृता: अपि अभिमता: कुपिता: अपि वश्या इति विरोधस्य चारुतामदाभ्यां समाधानात् उभयथा अपि विरोधाभास: भवन् अर्थान्तरन्यासेन संसृज्यते॥ ६४॥

वाससामिति। उपनाभि नाभिसमीपे वाससां शिथिलतां ह्रीनिरासं लज्जात्यागम् अपदे कुपितानि अस्थानकोपान् च गुणपक्षे गुणकोटौ विदधती निवेशयन्ती दोषान् अपि एतान् गुणान् कुर्वती इत्यर्थ:। मदिरा अपि योषितां वचनीयम्। "न नाभिं दर्शयेत्" इति शास्त्रनिषिद्धाचरणनिन्दां निर्ममार्ज। तथा दोषाणाम् अपि वस्त्रशैथिल्यादीनां तदानीं गुणत्वात् न कश्चित् वचनीयावकाश: इत्यर्थ:॥ ६५॥

आत्मनो मधुमदोद्यमितानाम् ।
व्रीड़या विफलता वनितानां
न स्थितं न विगतं हृदयेषु ॥६६॥

रुन्धती नयनवाक्यविकाशं
सादितोभयकरा परिरम्भे ।
व्रीड़ितस्य ललितं युवतीनां
क्षीवता बहुगुणैरनुजह्रे ॥६७॥

भर्तृष्विति । उपसखि सखीसमीपे । समीपार्थे अव्ययी भाव: । आत्मन: स्वदेहान् । "आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि" इति वैजयन्ती । भर्तृषु निक्षिपतीनां निपातयन्तीनां भर्तृणाम् उपरि पतन्तीनाम् इत्यर्थ: । "आच्छीनद्यो- र्नुम्" इति विकल्पात् नुमभाव: । कुत: ? मधुमदेन उद्यमितानां प्रेरितानां न तु स्वेच्छया इति भाव: । वनितानाम् अनुरक्तस्त्रीणाम् । "वनिता जनितात्यर्थानुरागायां च योषिति" इति विश्व: । हृदयेषु विफलया । अनुचिताचरणात् इति भाव: । व्रीड़या न स्थितं न विगतम् । वैफल्यात् तस्या: मदोपाधिकत्वात् च इति भाव: । अत एव न उभयनिषेधविरोध: ॥६६॥

रुन्धतीति । नयनानां वाक्यानां च विकाशं प्रागल्भ्यं रुन्धती प्रतिबध्नती । तथा परिरम्भे आलिङ्गने सादितौ स्तम्भितौ उभौ करौ यया सा युवतीनां सम्बन्धिनी क्षीवता मत्तता । कर्त्तरि क्त: । अनुपसर्गात् "फुल्लक्षीवकृशोल्लाघा:" इति निपातनात् साधु: । क्षीवा मत्ता तस्या: भाव: क्षीवता । त्वतलो: गुणवचनस्य पुंवद्भाव: वक्तव्य: । बहुगुणै: दृष्टिसङ्कोचा-

योषिदुद्धतमनोभवरागा
मानवत्यपि ययौ दयिताङ्कम् ।
कारयत्यनिभृता गुणदोषे
वारुणी खलु रहस्यविभेदम् ॥६८॥

आहिते नु मधुना मधुरत्वे
चेष्टितस्य गमिते नु विकाशम् ।
आबभौ नव इवोद्धतरागः
कामिनीष्ववसरः कुसुमेषोः ॥६९॥

टिभिः व्रीडितस्य व्रीडायाः । भावे क्तः । ललितं विलासम अनुजह्रे अनुचक्रे । कर्त्तरि लिट् । व्रीडाकार्य्यकरत्वात् व्रीडानुकरणम् इति उपमालङ्कारः ॥६७॥

योषिदिति । उद्धतः उत्कटः मनोभवेन यः रागः सः यस्याः सा योषित् मानवती अपि दयितस्य अङ्कं ययौ । यतः मानात् रागः बलीयान् इति भावः । लाघवदोषं परिहरति । कारयतीति । अनिभृता चपला न कार्य्यकारिणी इत्यर्थः । वारुणी मदिरा गुणेषु दोषेषु च विषये । सर्वः अपि द्वन्द्वः विभाषया एकवत् भवति । रहस्यविभेदं रहस्यभङ्गं कारयति खलु । बलात् निगूहितौ अपि गुणदोषौ प्रकाशयति इत्यर्थः । यतः निगूढरागप्रकटनं प्रकटमानत्यागश्च प्रमत्तायाः न लाघवम् आवहति अबुद्धिपूर्वकत्वात् इति भावः ॥६८॥

आहित इति । मधुना मद्येन चेष्टितस्य व्यापारस्य मधुरत्वे माधुर्य्ये आहिते नु ? प्रागसति एव मनोहरत्वे सम्प्रति उत्पादिते वा । विकाशं गमिते नु प्राक् सति एव माधुर्य्ये प्रकर्ष

मा गमन्मदविमूढधियो न:
प्रोज्झ्य रन्तुमिति शङ्कितनाथा: ।
योषितो न मदिरां भृशमीषु:
प्रेम पश्यति भयान्यपदेऽपि ॥७०॥

चित्तनिर्वृतिविधायि विविक्तं
मन्मथो मधुमद: शशिभास: ।

प्रापिते वा उद्धतराग: उद्रिक्तराग: । अत एव कुसुमेषो: कामि-
नीषु अवसर: प्रवेश: नव: इव आबभौ नित्यसन्निहित: अपि
मदन कामिनीषु मदकृततात्कालिकचेष्टामाधुर्य्यात् रागोद्रेक-
मति अपूर्ववत् उद्दीप: अभूत् इत्यर्थ: । संशयानुप्राणिता
इयम् उत्प्रेक्षा ॥६८॥

मा गमन्निति । शङ्कितनाथा: अविश्वस्तपुरुषा: योषित:
मदेन विमूढधिय: स्तब्धबुद्धय: न: अस्मान् प्रोज्झ्य विसृज्य ।
प्रपूर्वात् उज्झते: समासे अनञ्पूर्वे क्त्वो ल्यप् । रन्तुं मा गमन्
न गच्छन्तु इति मनीषया इति शेष: । गमे: माङि लुङ् "न
माङ्योगे" इति अडागमप्रतिषेध: । मदिरां भृशम् अतिमात्र
न ईषु: न इच्छन्ति स्म किन्तु भर्त्तृवियोगभयात् ईषत् एव
पपु. इत्यर्थ: । तथाहि । प्रेम स्नेह: अपदे अस्थाने अपि भयानि
अनिष्टानि पश्यति उत्प्रेक्षते शङ्कते इति यावत् । शङ्काहेतौ
प्रेमणि कर्त्तृत्वोपचार: ॥७०॥

चित्तेति । चित्तस्य निर्वृतिविधायि सुखकरं विविक्तं रह: ।
"विविक्तं रहसि स्मृतम्" इति विश्व: । मन्मथ: मधुमद: मद्य-
मद: शशिभास: चन्द्रिका: दयितै: सह सङ्गमश्च । "वृद्धो यूना"
इति निर्देशात सहशब्दाप्रयोगे अपि सहार्थे तृतीया । एतानि

सङ्गमश्च दयितैः स्म नयन्ति
प्रेम कामपि भुवं प्रमदानाम् ॥७१॥
धार्ष्ट्यलङ्घितयथोचितभूमौ
निर्दयं विलुलितालकमाल्ये ।
मानिनीरतिविधौ कुसुमेषुः
मत्तमत्त इव विभ्रममाप ॥७२॥
शीधुपानविधुरेषु वधूनां

प्रमदानां प्रेम वियोगासहत्वावस्थासम्भोगं काम् अपि भुवं काञ्चित् दशां नयन्ति स्म। रत्यवस्थाम् अपि अतिक्रम्य शृङ्गारावस्थां क्रीड़ामयीं निन्युः इत्यर्थः।"प्रेमाभिलाषो रागश्च स्नेहः प्रेम रतिस्तथा। शृङ्गारश्चेति सम्भोगः सप्तावस्थः प्रकीर्त्तितः॥" इति उक्तं रसरत्नाकरे। "प्रेमा दिदृक्षा रम्येषु तच्चिन्ताप्यभिलाषकः। रागस्तत्सङ्गबुद्धिः स्यात् स्नेहस्तत्प्रवणक्रिया॥ तद्वियोगासहं प्रेम रतिस्तत्सहवर्त्तनम्। शृङ्गारस्तत्समं क्रीड़ा सम्भोगः सप्तधा क्रमः॥" इति ॥७१॥

क्रीड़ावस्थाम् आह। धार्ष्ट्येति। धार्ष्ट्येन प्रागल्भ्येन लङ्घिता यथोचिता योग्या भूमिः मर्य्यादा यस्मिन् तथोक्ते। चुम्बनताड़नमणितसीत्कारपुरुषायितादौ स्वयम् उच्छृङ्खलवृत्तिः इति भावः। निर्दयं यथा तथा विलुलितानि आकर्षणाकुलितानि अलकमाल्यानि यस्मिन् तस्मिन् मानिनीः रतिविधौ स्त्रीसुरते कुसुमेषुः कामः मत्तमत्तः मत्तप्रकारः इव विभ्रमं विजृम्भणम् आप प्राप। मत्तः किं न करोति इति भावः। कार्य्यितरि कर्त्तृत्वोपचारात् उत्प्रेक्षा ॥७२॥

शीध्विति। शीधुपानेन मद्यपानेन विधुरेषु विह्वलेषु।

निघ्नतामुपगतेषु वपुःषु ।
ईहितं रतिरसाहितभावं
वीतलक्ष्यमपि कामिषु रेजे ॥ ७३ ॥

अन्योन्यरक्तमनसामथ बिभ्रतीनां
चेतोभुवो हरिसखाप्सरसां निदेशम् ।
वैबोधिकध्वनिविभावितपश्चिमार्द्धा
सा संहृतेव परिवृत्तिमियाय रात्रिः ॥ ७४ ॥

"मैरेयमासवः शीधुः" इत्यमरः । अत एव वपुःषु अङ्गेषु निघ्नतां प्रियपराधीनताम् उपगतेषु सत्सु । "अधीनो निघ्न आयत्तः" इत्यमरः । वधूनां सम्बन्धि रतिरसे सुरतरसास्वादे आहित-भावं दत्तचित्तं कामिषु विषये ईहितं चुम्बनताड़नादिचेष्टितं वीतलक्ष्यं निर्विषयम् अस्थानकृतम् अपि इत्यर्थः । रेजे रागिणां स्खलितम् अपि शोभते इति भावः । विरोधालङ्कारः ॥७३॥

अन्योन्येति । अथ हरिसखाः इन्द्रसचिवाः गन्धर्वाः तेषाम् अप्सरसां च अन्योन्यरक्तमनसां परस्परानुरक्तचित्तानां चेतोभुवः कामस्य निदेशम् आज्ञां बिभ्रतीनां स्मरविधेयानां तासु रम-माणासु एव इत्यर्थः । "षष्ठी चानादरे" इति षष्ठी । विबोधन-शीलम् एषां ते वैबोधिकाः वैतालिकाः । "शीलम्" इति ठक् । तेषां ध्वनिभिः मङ्गलरवैः विभावितः अभ्यूहितः ज्ञातः पश्चि-मार्द्धः चरमभागः यस्याः सा तथोक्ता सा रात्रिः संहृता संक्षिप्ता एव इति उत्प्रेक्षा । सुखिनां भूयान् अपि कालः लघीयान् इव भवति इति भावः । परिवृत्तिं विवृत्तिम् इयाय प्रभात-कल्पा अभूत् इत्यर्थः ॥७४॥

निद्राविनोदितनितान्तरतिक्लमानाम्
आयामिमङ्गलनिनादविबोधितानाम् ।
रामासु भाविविरहाकुलितासु यूनां
तत्पूर्वतामिव समादधिरे रतानि ॥ ७५ ॥

कान्ताजनं सुरतखेदनिमीलिताक्षं
संवाहितुं समुपयानिव मन्दमन्दम् ।
हर्म्येषु माल्यमदिरापरिभोगगन्धान्
आविश्चकार रजनीपरिवृत्तिवायुः ॥ ७६ ॥

निद्रेति । निद्रया विनोदितः अपनीतः नितान्तम् अत्यर्थं यः रत्याः क्लमः सः येषां तेषाम् आयामिभिः आयामवद्भिः दीर्घैः मङ्गलनिनादैः वैबोधिकध्वनिभिः विबोधितानाम् । यूनां रामासु । "सुन्दरी रमणी रामा" इत्यमरः । भाविविरहेण आकुलितासु सतीषु रतानि तानि एव पूर्वाणि प्रथमानि तत्पूर्वाणि तेषां भावः तत्पूर्वता ताम् । भावे तल्प्रत्ययः । समादधिरे प्रापुः इव सति उत्प्रेक्षा । आद्यसुरतवत् आदरात् प्रवर्त्तन्त इत्यर्थः । यदुत्तरकालं दुर्लभं तत् अतितृष्णया अनुभूयते इत्यर्थः ॥७५॥

कान्तेति । सुरतखेदेन निमीलितानि अक्षीणि येन तं कान्ताजनं स्त्रीसमूहं संवाहितुं सेवितुम् इव खेदापनोदार्थम् अङ्गमर्दनं कर्त्तुम् इव इत्यर्थः । "संवाहनं वाहनेऽपि नरादेरङ्गमर्दने" इति विश्वः । "वाह प्रयत्ने" इति धातोः अण्यन्तात् तुमुन् । अन्यथा णिजग्रहणे संवाहयितुम् इति स्यात् । मन्दमन्दं मन्दप्रकारम् "प्रकारे गुणवचनस्य" इति द्विर्भावे कर्मधारयवद्भावात् सुपः लुक् । समुपयान् संवान् रजनीपरिवृत्ति-

आमोदवासितचलाधरपल्लवेषु
निद्राकषायितविपाटललोचनेषु।
व्यामृष्टपत्रतिलकेषु विलासिनीनां
शोभां बबन्ध वदनेषु मदावशेषः॥ ७७॥
गतवति नखलेखालच्यतामङ्गरागे
समददयितपीताताम्रबिम्बाधराणाम्।

वायुः निशावसानमरुत्। हर्म्येषु माल्यानि च मदिरा च परिभोगः विमर्दश्च तेषां गन्धान् आविश्चकार बहिः प्रसर्पयामास इत्यर्थः। अत्र संवाहितुम् इव इति उत्प्रेक्षा। मान्द्य-गुणमूलत्वात् गुणनिमित्तक्रियाफला उत्प्रेक्षा॥७६॥

आमोदेति। आमोदेन मद्यगन्धेन वासिताः सुरभिताः चलाः दष्टमुक्तत्वात् स्फुरन्तश्च अधरपल्लवाः येषु तेषु, निद्रया कषायितानि अपटूकृतानि विपाटलानि लोचनानि येषु तेषु। "कषायस्तुवरे न स्त्री निर्य्यासे रञ्जकादिके। सुरभावपटौ रक्ते सुन्दरे लवणेऽपि च॥" इति केशवः। व्यामृष्टानि प्रमृष्टानि पत्राणि तिलकाश्च येषां तेषु विलासिनीनां वदनेषु मदावशेषः शोभां बबन्ध। मण्डनान्तरापाये मदशेषः एव मण्डनं बभूव इत्यर्थः। स्त्रीणां मदः एव विभूषणम् इति भावः॥७७॥

गतवतीति। अङ्गरागे अङ्गविलेपने नखरेखासु नखपदेषु लच्यतां दृश्यतां गतवति सति विमर्दात् तन्मात्रावशेषे सति इत्यर्थः। किञ्च बिम्बतुल्याः अधराः बिम्बाधराः। "शाकपार्थिवादित्वात् मध्यमपदलोपी समानाधिकरणसमासः" इति वामनः। समदैः दयितैः पीताः पीड़िताः अत एव अतिपीड़नात् आताम्राः आसमन्तात् रक्ताः बिम्बाधराः यासां तासाम्

विरहविधुरमिष्टा सत्सखीवाङ्गनानां
हृदयमवललम्बे रात्रिसम्भोगलक्ष्मीः ॥७८॥

इति सुरसुन्दरीसम्भोगवर्णनं नाम
नवमः सर्गः ॥ ९ ॥

---

## दशमः सर्गः।

—:०:—

अथ परिमलजामवाप्य लक्ष्मीम्
अवयवदीपितमण्डनश्रियस्ताः।
वसतिमभिविहाय रम्यहाराः
सुरपतिसूनुविलोभनाय जग्मुः ॥१॥

अङ्गनानां सम्बन्धि विरहेण आह्निकेन वियोगेन विधुरं विह्वलं हृदयं रात्रिसम्भोगलक्ष्मीः नखपदादिशोभा इत्यर्थः। इष्टा आप्ता सत्सखी इव निपुणसहचरी इव अवललम्बे धारयामास। प्रियसम्भोगचिह्नशोभा स्पष्टा बभूव इत्यर्थः। प्रियोपभोगचिह्नशोभावलोकनलालसाः कथं विरहं सहन्ते इत्यर्थः। श्रौती पूर्णा उपमा अलङ्कारः। मालिनीवृत्तम्। लक्षणं तु उक्तम्।७८॥

इति किरातार्जुनीयकाव्यस्य नवमसर्गव्याख्या समाप्ता।

---

अथ आगन्तुकसहजशोभासम्पन्नतया समग्रसाधनाः स्त्रियः मुनिमनःप्रलोभनार्थं प्रास्थन् इति आह। अथेति। अथ प्रभाते परिमलजां सम्भोगसम्भूतां लक्ष्मीं शोभाम् अवाप्य। "सम्भोगः स्यात् परिमले" इति वैजयन्ती। सम्भोगात् स्त्रिय

द्रुतपदमभियातुमिच्छतीनां
गगनपरिक्रमलाघवेन तासाम् ।
अवनिषु चरणैः पृथुस्तनीनाम्
अलघुनितम्बतया चिरं निषेदे ॥ २ ॥

निहितसरसयावकैर्बभासे
चरणतलैः कृतपद्धतिर्वधूनाम् ।

शोभन्त इति भावः । एतेन आगन्तुकशोभासम्पत्तिः उक्ता । अत एव सुरतादिवर्णनस्य प्रस्तुतोपयोगित्वं च उक्तम् । अथ सहजशोभासम्पत्तिम् आह । अवयवेति । अवयवैः स्तनादिभिः दीपिता मण्डिता मण्डनश्रीः प्रसाधनशोभा याभिः ताः । रम्यहावाः मनोहरविलासाः ताः स्त्रियः । "हावो विलासश्चेष्टायाम्" इति विश्वः । वसतिं शिविरम् अभिविहाय सर्वतः त्यक्त्वा सुरपतिसूनोः अर्जुनस्य विलोभनाय जग्मुः । अत्र अवयवदीपकतया प्रसिद्धस्य मण्डनस्य तद्दीप्यत्वासम्बन्धे अपि सम्बन्धाभिधानात् अवयवसौन्दर्य्यातिशयद्योतनार्थत्वात् अतिशयोक्तिः अलङ्कारः अस्मिन् सर्गे पुष्पिताग्रावृत्तम् । "अयुजि न युगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा" इति लक्षणात् ॥ १ ॥

द्रुतेति । गगनपरिक्रमलाघवेन गगनगमनवेगेन द्रुतपदं यथा तथा अभियातुं गन्तुम् इच्छतीनां पृथुस्तनीनां तासाम् अप्सरसाम् अलघुनितम्बतया न लघवः नितम्बाः यासां तासां भावः तत्ता तया चरणैः अवनिषु चिरं निषेदे स्थितम् । अभ्यासपाटवेन मनसा त्वरमाणानाम् अपि तासां स्तनजघनभारात् चरणाः न उत्तस्थुः इत्यर्थः ॥ २ ॥

अविरलविततेव शक्रगोपै-
अरुणितनीलतृणोलपा धरित्री ॥ ३ ॥
ध्वनिरगविवरेषु नूपुराणां
पृथुरशनागुणशिञ्जितानुयातः।
प्रतिरववितितो वनानि चक्रे
मुखरसमुत्सुकहंससारसानि ॥ ४ ॥

निहितेति। निहिताः आरोपिताः मन्मथावकाः मान्द्रा-लाक्षारागाः येषु तैः वधूनां चरणतलैः चरणन्यासैः कृतपद्धतिः कृतमार्गरेखा। अत एव अरुणिताः अरुणीकृताः नीलाः तृणा-लपाः तृणानि दूर्वादीनि उलपाः बल्वजाख्याः तृणविशेषाश्च यस्याः सा। "उलपा बल्वजाः प्रोक्ताः" इति हलायुधः। "उलपा उशीरतृणानि" इति क्षीरस्वामी। ब्राह्मणपरिव्राजकवत् उलपानां पृथक् निर्देशः। धरित्री शक्रगोपैः इन्द्रगोपाख्यैः कीटकैः। "इन्द्रगोपस्त्वग्निरजः" इति हैमः। अविरलं निर-न्तरं यथा तथा वितता व्याप्ता इव इति उत्प्रेक्षा। बभासे ॥३॥

ध्वनिरिति। अगविवरेषु नगरन्ध्रेषु गुहासु इत्यर्थः। प्रतिरवैः प्रतिध्वनिभिः। विततः मम्मूर्च्छितः पृथुभिः रशना-गुणानां शिञ्जितैः स्वनितैः अनुयातः अनुगतः मिलितः इति यावत्। अश्नोतेः युच् स्यात्। रसादेशश्च। रशना काञ्ची तालव्यशकारवान् अयं जिह्वावाची तु दन्त्यसकारवान् इति सिद्धान्तः। "काञ्ची सप्तकी रशना तथा" इत्यमरः। "स्वनिते वस्त्रपर्णानां भूषणानां तु शिञ्जितम्" इत्यमरः। नूपुराणां ध्वनिः ध्वानः वनानि मुखराः शब्दायमानाः समुत्सुकाः उत्क-ण्ठिताः हंसाः सारसाश्च येषां तानि चक्रे। अत्र हंसादिमुखर-

अवचयपरिभोगवन्ति हिंस्रैः
सहचरितान्यमृगाणि काननानि ।
अभिदधुरभितो मुनिं वधूभ्यः
समुदितसाध्वसविक्लवञ्च चेतः ॥ ५ ॥

नृपतिमुनिपरिग्रहेण सा भूः
सुरसचिवाप्सरसां जहार तेजः ।
उपहितपरमप्रभावधाम्नां
न हि जयिनां तपसामलङ्घ्यमस्ति ॥ ६ ॥

समुत्सुकीकरणरूपेण वस्तुना तेषां नूपुरादिध्वनौ सादृश्यात् हंससारसादिरकूजितभ्रान्तिप्रतीतेः भ्रान्तिमदलङ्कारः व्यज्यते ॥४॥

अवचयेति । अवचयः पुष्पफलादिच्छेदनं परिभोगः उपभोगः । तद्वन्ति हिंस्राः घातुकाः व्याघ्रादयः । "शरारुर्घातुको हिंस्र" इत्यमरः । तैः सहचरिताः सहचरन्तः । कर्त्तरि क्तः । "मतिबुद्धि"इत्यादिसूत्रेण चकारात् शीलितादिवत् वर्त्तमानार्थता । अन्ये हिंस्रेतरे मृगाः हरिणादयः येषु तानि सहचरितानि अमृगाणि काननानि । तथा समुदितेन साध्वसेन विक्लवं विवशं चेतश्च वधूभ्यः । "क्रियाग्रहणमपि कर्त्तव्यम्" इति सम्प्रदानत्वात् चतुर्थी । अभितः मुनिम् अभिदधुः सूचयामासुः इत्यर्थः । अवचयादिलिङ्गचतुष्टयेन आसन्नः मुनिः इति अन्वमीयत इत्यर्थः ।५॥

नृपतिमुनिपरिग्रहेणेति । सा भूः नृपतिः एव मुनिः तस्य परिग्रहेण अधिष्ठानेन हेतुना सुरसचिवानां गन्धर्वाणाम् अप्सरसां च तेजः जहार । तदाश्रमप्रवेशात् एव निस्तेजस्काः

सचकितमिव विस्मयाकुलाभिः
शुचिसिकतास्वतिमानुषाणि ताभिः ।
क्षितिषु ददृशिरे पदानि जिष्णोः
उपहितकेतुरथाङ्गलाञ्छनानि ॥ ७ ॥

अतिशयितवनान्तरद्युतीनां
फलकुसुमावचयेऽपि तद्विधानाम् ।
ऋतुरिव तरुवीरुधां समृद्ध्या
युवतिजनैर्जगृहे मुनिप्रभावः ॥ ८ ॥

अभूवन् इत्यर्थः । ननु कथं मानुषेण अमानुषतेजः निरस्तम् ? इति आशङ्क्य आह । हि यस्मात् उपहिते आहिते परमे प्रभाव-धाम्नी सामर्थ्यतेजसी येषां तेषां जयिनां जयनशीलानाम् । "महताम्" इति पाठे महताम् उत्कटानां तपसाम् अलङ्घ्यं न अस्ति । किम् अपि असाध्यं न अस्ति इति भावः ॥६॥

सचकितमिति । विस्मयाकुलाभिः ताभिः स्त्रीभिः कर्त्रीभिः शुचयः सिकताः यासु तासु पादरेखाभिव्यक्तियोग्यासु इत्यर्थः । क्षितिषु उपहितानि विन्यस्तानि केतुरथाङ्गलाञ्छनानि रेखा-स्वरूपध्वजचक्राणि एव चिह्नानि येषु तानि अत एव अतिमानुषाणि जिष्णोः अर्जुनस्य पदानि सचकितम् इव सभयम् इव यथा तथा ददृशिरे दृष्टानि । अद्भुतवस्तुदर्शनात् भयविस्मयौ भवतः इति भावः ॥७॥

अतिशयितेति । अतिशयिता अतिक्रान्ता वनान्तराणां द्युतिः याभिः तासाम् । कुतः ? फलानां कुसुमानाञ्च अवचये अपि लवने अपि सा एव विधा प्रकारः यासां तद्विधानां तथा

मृदितकिसलयः सुराङ्गनानां
ससलिलवल्कलभारभुग्नशाखः ।
बहुमतिमधिकां ययावशोकः
परिजनतापि गुणाय सद्गुणानाम् ॥ ९ ॥
यमनियमकृशीकृतस्थिराङ्गः
परिददृशे विधृतायुधः स ताभिः ।
अनुपमशमदीप्ततागरीयान्
कृतपदपङ्क्तिरथर्वणेव वेदः ॥ १० ॥

..त्र समग्राणाम इत्यर्थः । तरूणां वीरुधाञ्च समृद्धरा लिङ्गेन वर्त्तिजनैः मुनिप्रभावः ऋतुः इव जगद्भिः निश्चितः कारणतया इति शेषः । उपमालङ्कारः ॥८॥

मृदितेति । ससलिलम् आर्द्रं यत् वल्कलं तत् एव भारः तेन भुग्नशाखः नम्रशाखः "वल्कं वल्कलमस्त्रियाम्" इत्यमरः । अत एव मृदितकिसलयः विलुलितपल्लवः । "कृचिन्न" इति प्रतिषेधात् न मृदेः गुणः । अशोकः वृक्षविशेषः सुराङ्गनानाम् अप्सरसां सम्बन्धिनीम् अधिकां बहुमतिं तत्कर्तृकसम्मानं तज्जनसेवो धन्यः अयम् इति ययौ प्राप । ननु सेवकेषु का श्लाघा ? इति अत आह । परीति । सद्गुणानां महतां परिजनता अपि अनुचरत्वम् अपि । भावे तल् । गुणाय उत्कर्षाय भवति इति शेषः । एतेन तासां मुनेः प्रभावदर्शनात् एव पारवश्यं गम्यते ॥९॥

यमेति । यमः देशकालाद्यनपेक्षया शुद्धिहेतुः अहिंसादिः, नियमः तदपेक्षया शुद्धिहेतुः तपःस्वाध्यायादिः ताभ्यां कृशी-

शशधर इव लोचनाभिरामैः
गगनविसारिभिरंशुभिः परीतः ।
शिखरनिचयमेकसानुसद्मा
सकलमिवापि दधन्महीधरस्य ॥ ११ ॥

सुरसरिति परन्तपोऽधिगच्छन्
विधृतपिशङ्गबृहज्जटाकलापः ।
हविरिव विततः शिखासमूहैः
समभिलषन्नुपवेदि जातवेदाः ॥ १२ ॥

कृतानि अपि स्थिराणि दृढानि अङ्गानि यस्य सः । विधृतायुध
भृतशस्त्रः अत एव तपःशास्त्रयुक्तः सः अर्जुनः शमः शान्ति
रस्य हृदयकाण्डे दीप्तता उग्रता अभिचारकाण्डे ताभ्याम् अनुप
लभ्यां गरीयान् उदग्रः । अथर्वणा वशिष्ठेन कृता रचिता
लक्ष्मी पङ्क्तिः आनुपूर्वी यस्य सः वेदः चतुर्थवेदः इत्यर्थः ।
अथर्वणस्तु स्वाध्यायः वशिष्ठकृतः इति आगमः । सः इव नाभि
लक्ष्यः परिदृश्यते दृष्टः ॥१०॥

अथ चतुर्भिः तम् एव विशिनष्टि । शशधरेत्यादिभिः। शश
धरः चन्द्रः इव लोचनाभिरामैः आह्लादकरैः गगनविसारिभि
रंशुभिः तेजोभिः परीतः व्याप्तः । अन्तरवत् एकं सानु सद्म
यस्य सः एकदेशस्थः अपि इत्यर्थः । महीधरस्य इन्द्रकीलस्य
सकलं शिखरनिचयम् अपि दधत् आह्लादयन् इव इति
उत्प्रेक्षा ॥११॥

सुरेति । पुनः सुरसरिति गङ्गाकूले परन्तपः अधिगच्छन्
ज्वलयन् फलाभिलाषेण इति शेषः । हविः समभिलषन् इति

सदृशमतनुमाकृतेः प्रयत्नं
तदनुगुणामपरैः क्रियामलङ्घ्याम्।
दधदलघु तपःक्रियानुरूपं
विजयवतीञ्च तपःसमां समृद्धिम्॥ १३॥
चिरनियमकृशोऽपि शैलसारः
शमनिरतोऽपि दुरासदः प्रकृत्या।

...विशेषणसामर्थ्यात्। तथा विहृतः पिशङ्ग... ...यैन सः। अत एव उपरिष्टात् वेध्याम्। विभक्त्यर्थे अव्ययी... ...। शिखासमूहैः ज्वालाजालैः विततः विस्तृतः... ...इत्यादिकं समभिलषन्। जातवेदः हिरण्यं भोज्यं ... ...ति यावत्। यस्मात् इति जातवेदाः वह्निः इव स्थितः॥१२॥

सदृशमिति। पुनः आकृतेः वपुषः। "आकृतिः कथिता ...पे सामान्यवपुषोरपि" इति विश्वः। सदृशं तुल्यम् अतनु ...ल्पं प्रयत्नम् उद्योगं दधत्। तथा तदनुगुणां प्रयत्नानु...गुणाम् अपरैः अन्यैः अलङ्घ्यां कर्तुम् अशक्याम् इत्यर्थः। क्रियां व्यापारं दधत्। तथा क्रियानुरूपम् अलघु गुरु तपः दधत्। तथा विजयवतीं सर्वोत्कर्षवतीं विजयविफलां वा तपःक्रियानु...रूपां तपःसमां समृद्धिम् ऐश्वर्यं दधत्। अत्र पूर्वं प्रति उत्त...रस्य विशेषणतया स्थापनात् प्रथमैकावली अलङ्कारः। "यथापूर्व...परस्य विशेषणतया स्थापनम् एकावली" इति सर्वस्वसूत्रात्॥१३॥

चिरनियमेति। पुनश्च चिरनियमेन दीर्घकालतपसा कृशः क्षीणाङ्गः अपि शैलसारः। उपमानपूर्वपदः बहुव्रीहिः। शम...निरतः अपि प्रकृत्या दुरासदः दुर्धर्षः निर्जने विजने देशे तिष्ठन् अपि ससचिवः सपरिवारः इव। किञ्च मुनिः अपि ऐश्वर्यैरहितः

सममचिव इव निर्जनेऽपि तिष्ठन्
मुनिरपि तुल्यरुचिस्त्रिलोकभर्तुः ॥ १४ ॥
तनुमवजितलोकसारधाम्नीं
त्रिभुवनगुप्तिसहां विलोकयन्त्यः।
अवययुरमरस्त्रियोऽस्य यत्नं
विजयफले विफलं तपोऽधिकारे ॥ १५ ॥
मुनिदनुतनयान् विलोभ्य सद्यः

अपि इत्यर्थः। त्रयाणां लोकानां भर्तुः इन्द्रस्य। "तद्धितार्थ" इत्यादिना उत्तरपदसमासः। तुल्यरुचिः समानतेजाः। अपि-शब्दः सर्वत्र विरोधद्योतनार्थः। स च मुनेः अतर्क्यमहिमत्वेन निरस्तः इति विरोधालङ्कारः। "विरोधाभासत्वं विरोधः" इति सूत्रात् ॥१४॥

तनुमिति। अवजिते तिरस्कृते लोकानां सारधाम्नी सत्त्व तेजसी यया ताम्। "अन उपधा" इत्यादिना ङीप्। त्रयाणां भुवनानां समाहारः त्रिभुवनम्। "तद्धितार्थ" इत्यादिना समाहारार्थे तत्पुरुषः। पात्रादित्वात् स्त्रीत्वप्रतिषेधः। तस्य गुप्तौ रक्षणे सहां समर्थाम्। पचाद्यच्। तनुं मूर्त्तिं विलोकयन्त्य अमरस्त्रियः अप्सरसः विजयफले विजयार्थे तपोऽधिकारे तपो ऽनुष्ठाने अस्य अर्जुनस्य यत्नं विफलम् अवययुः मेनिरे। त्रैलोक्याधिपत्यादिमहाफलसाधनसमर्थस्य तुच्छफलाभिलाषः मत्त मातङ्गमांसभोगोचितस्य कण्ठीरवस्य जीर्णतृणचर्वणोत्कण्ठा इव न शोभाम् आवहति इति भावः। अत्र विशिष्टतनुविलोकनस्य स्त्रीविशेषणवैफल्यज्ञानहेतुत्वोक्त्या पदार्थहेतुकः काव्य-लिङ्गम् अलङ्कारः ॥१५॥

प्रतनुबलान्यधितिष्ठतस्तपांसि ।
अलघुनि बहु मेनिरे च ताः स्वं
कुलिशभृता विहितं पदे नियोगम् ॥ १६ ॥

अथ कृतकविलोभनं विधित्सौ
युवतिजने हरिसूनुदर्शनेन ।
प्रसभमवततार चित्तजन्मा
हरति मनो मधुरा हि यौवनश्रीः ॥ १७ ॥

सपदि हरिसखैर्वधूनिदेशात्

प्रतनुबलानीति । प्रतनुबलानि अनुत्कृष्टसाराणि तपांसि अधितिष्ठतः अनुतिष्ठतः मुनीन् तनुतनयान् दानवान् च मदा... तपस्यं पदे विलोभय आगम्य चिरात् कुलिशभृता शक्रेण ...जुने पदे स्थाने विहितं दत्तं स्वं स्वकीयं नियोगम् अधिकारं ताः स्त्रियः बहु यथा तथा मेनिरे । निकृष्टपदवर्त्तीनाम् उत्कृष्टपदलाभः महान् । बहुमानमूलम् इति भावः । विलोभ्य मेनिरे इति अन्वयः । यद्वा विलोभ्य लोभं कारयित्वा विहितं शक्रेण इति अन्वयात् समानकर्तृत्वनिर्वाहः ॥१६॥

अथेति । अथ अनन्तरं कृतकविलोभनं कृत्रिमं विलोभनं विधित्सौ विधातुम् इच्छौ । विपूर्वात् दधातेः सन्नन्तात् उप्रत्ययः । युवतिजने हरिसूनोः अर्जुनस्य दर्शनेन चित्तजन्मा कामः प्रसभं बलात् अवततार । दैवतत्परं वञ्चयितुम् आगतस्य मोह... भवति यतः स्वयं मुनिवञ्चनप्रवृत्ताः स्त्रियः तेन वञ्चिताः इत्यर्थः । युक्तञ्च एतत् । हि यस्मात् मधुरा मनोहरा यौवनश्रीः मनः हरति । बलात् इति शेषः ॥१७॥

ध्वनितमनोरमवल्लकीमृदङ्गैः।
युगपदृतुगणस्य सन्निधानं
वियति वने च यथायथं वितेने॥ १८॥
सजलजलधरं नभो विरेजे
विवृतिमियाय रुचिस्तड़िल्लतानाम्।
व्यवहितरतिविग्रहैर्वितेने
जलगुरुभिस्तनितैर्दिगन्तरेषु॥ १९॥
परिसुरपतिसूनुधाम सद्यः
समुपदधन् मुकुलानि मालतीनाम्।

सपदीति। सपदि वधूनां निदेशात् नियोगात् ध्वनिताः नादिताः मनोरमाः वल्लक्यः वीणाः मृदङ्गाश्च यैः तैः हरिमखगन्धर्वैः वियति आकाशे वने च युगपत् ऋतुगणस्य ऋतुषट्कस्य सन्निधानम् आविर्भावः यथायथं यथास्वम् असङ्करेण इत्यर्थः। "यथास्वं तु यथायथम्" इति निपातः। वितेने विस्तारै उद्दीपनसामग्री सम्पादिता इत्यर्थः॥१८॥

अथ वर्षाक्रमेण ऋतून् वर्णयति। सजलेत्यादि। सजलाः जलधराः यस्मिन् तन्नभः विरेजे। तड़ितः लताः इव तासां रुचिः प्रभा विवृतिं विजृम्भणम् इयाय। तथा व्यवहितरतिविग्रहैः दूरीकृतरतिप्रकल्पितप्रणयकलहैः जलगुरुभिः जलभारात् गम्भीरैः इत्यर्थः। स्तनितैः गर्जितैः दिगन्तरेषु वितेने विततैः अभावि। भा। लिट्। अकर्मकत्वं वैवक्षिकम्। अत एव दिगन्तरेषु इति अधिकरणत्वेन प्रयोगः। अन्यथा कर्मत्वम् एव स्यात्॥१९॥

विरलमपजहार बद्धबिन्दुः
सरजसतामवनेरपां निपातः ॥ २० ॥
प्रतिदिशमभिगच्छताभिमृष्टः
ककुभविकाससुगन्धिनानिलेन।
नव इव विबभौ सचित्तजन्मा
गतधृतिराकुलितश्च जीवलोकः ॥ २१ ॥

परीति। परिसुरपतिसूनुधाम अर्जुनाश्रमं प्रति। परीति लक्षणार्थे कर्मप्रवचनीयस्य योगात् द्वितीया। यद्वा वर्जनार्थस्य तस्य अत्र विरोधात् विभक्त्यर्थे अव्ययीभावः। तथा च सुरपतिसूनुधाम्नि इत्यर्थः। सद्यः मालतीनां जातीलतानाम्। "सुमना मालती जातिः" इत्यमरः। मुकुलानि समुद्गमयन् जनयन्। विरलं यथा तथा बद्धबिन्दुः अपां निपातः वृष्टिः अवनेः सम्बन्धिनीं सरजसतां सरजस्कत्वम्। "अचतुर"इत्यादिसूत्रेण साकल्यार्थे अव्ययीभावः। "समासान्तनिपातश्च बहुव्रीह्यर्थः तु लक्ष्यते। अव्ययीभावदर्शनन्तु प्रायिकम्" इति केचित्। अपजहार धूलिं शमयामास इत्यर्थः ॥२०॥

प्रतिदिशमिति। दिशि दिशि प्रतिदिशम्। यथार्थे अव्ययीभावः शरत्प्रभृतित्वात् समासान्तनिपातः। अभिगच्छता संवाता ककुभानि अर्जुनकुसुमानि। "इन्द्रद्रुः ककुभोऽर्जुनः" इत्यमरः। तेषां विकासेन सुगन्धिना मनोज्ञगन्धेन। गन्धस्येदे तदेकान्तग्रहणं प्रायिकम्। अनिलेन अभिमृष्टः अत एव सचित्तजन्मा कामाक्रान्तः इत्यर्थः। अत एव गतधृतिः गतधैर्यः आकुलितः क्षोभितश्च रतिं प्रति इति भावः। एवम्भूतः जीव-

व्यथितमपि भृशं मनो हरन्ती
परिणतजम्बुफलोपभोगहृष्टा ।
परभृतयुवतिः स्वनं वितेने
नवनवयोजितकण्ठरागरम्यम् ॥ २२ ॥
अभिभवति मनः कदम्बवायौ
मदमधुरे च शिखण्डिनां निनादे ।
जन इव न धृतेश्चचाल जिष्णुः
न हि महतां सुकरः समाधिभङ्गः ॥ २३ ॥

[illegible] इव विभ्रमो भाति
[illegible] । इति [illegible] ॥२१॥

व्यथितमिति । व्यथितं दुःखितम् अपि मनः भृशं हरन्ती [illegible] सुखितम इति भावः । जम्ब्वाः फलं जम्बु । "वा [illegible] फले जम्बू जम्बूः स्त्री जम्बु जाम्बवम्" इत्यमरः । "जम्ब्वा वा" इति [illegible] अपि "फले लुक्" इति लुक् । "लुक् तद्धितलुकि" इति स्त्रीप्रत्ययनिवृत्तिः । जम्बु च तत् फलञ्च इति सामानाधिकरण्येन सह निर्देशः । यद्वा जम्ब्वाः फलम् इति विग्रहः । "इको ह्रस्वोऽङ्यो गालवस्य" इति ह्रस्वः । तस्य परिणतस्य उपभोगेन हृष्टा । अत एव परभृतयुवतिः कोकिलाङ्गना नवनवं नवप्रकारं यथा तथा योजितेन सम्पादितेन कण्ठरागेण कण्ठमाधुर्य्येण रम्यं सौम्यम् इत्यर्थः । स्वनं स्वरं वितेने वर्षासु अपि मधुराः स्वराः कोकिलायाः इति [illegible] ॥२२॥

अभिभवतीति । कदम्बवायौ कदम्बसम्बन्धिनि मारुते

धृतबिसवलयावलिर्वहन्ती
कुमुदवनैकदुकूलमात्तबाणा।
शरदमलतले सरोजपाणौ
घनसमयेन वधूरिवाललम्बे॥ २४॥
समदशिखिरुतानि हंसनादैः
कुमुदवनानि कदम्बपुष्पवृष्ट्या।

मदमधुरे शिखण्डिनां निनादे च मनः अभिभवति अभिहरति मति जिष्णुः जयनशीलः अर्जुनः जनः पृथग्जनः इव धैर्यात् न चचाल। वर्षाः अपि तद्द्वीपनाय न शक्ताः इत्यर्थः। हि यस्मात् महतां समाधिभङ्गः सुकरः न। न केन अपि कर्त्तुं शक्यते इत्यर्थः ॥२३॥

धृतेति। बिसानि वलयानि इव तेषां आवलिः धृता यया सा। कुमुदवनम् एकं मुख्यं दुकूलम् इव तत् वहन्ती। आत्तानि गृहीतानि बाणानि नीलझिण्टीनि यया सा आत्तबाणा धृतशरा च। "गृह्णीयात् क्षत्रिया शरम्" इति स्मरणात्। "बाणोक्ता नीलझिण्टी च" इति वैजयन्ती। शरद्वधू जाया इव घनसमयेन वर्षर्त्तुना वरेण इति शेषः। अमलतले निर्मलतले सरोजं पाणिः इव तस्मिन् आललम्बे जगृहे। कर्मणि लिट्। वधूवरसमागमवद्दतुसन्धिः अशोभत इत्यर्थः। अत्र "आत्तबाणा" इति झिण्टीशरयोः बाणयोः अभेदाध्यवसायात् श्लेषमूला अतिशयोक्तिः उपमाङ्गम् इति अनयोः सङ्करः ॥२४॥

अथ ऋतुसन्धिं वर्णयति। समदेति। समदशिखिरुतानि मत्तमयूरकूजितानि हंसनादैः समेत्य तथा कुमुदवनानि

श्रियमतिशयिनीं समेत्य जग्मुः
गुणमहतां महते गुणाय योगः ॥ २५ ॥

सरजसमपहाय केतकीनां
प्रसवमुपान्तिकनीपरेणुकीर्णम्।
प्रियमधुरसनानि षट्पदाली
मलिनयति स्म विनीलबन्धनानि ॥ २६ ॥

कदम्बपुष्पलक्ष्म्या समेत्य अतिशयिनीम् अतिशयवतीं श्रियं जग्मुः। तथाहि। गुणमहतां गुणाधिकानां योगः परस्परसमागमः महते गुणाय उत्कर्षाय भवति इति शेषः। अत्र त्रिपाद्यां समालङ्कारः। "सा समालङ्कृतिर्योग्यवस्तुनोरुभयोरपि" इति लक्षणात्। सः अपि चतुर्थेन अर्थान्तरन्यासेन स्वसमर्थकेन अङ्गाङ्गिभावेन सङ्कीर्य्यते ॥२५॥

सरजसमिति। प्रियमधुः इष्टमकरन्दः। न अत्र कामसमासान्तः पुंलिङ्गोत्तरपदः बहुव्रीहिः नपुंसकलिङ्गस्य एव मधुशब्दस्य उरःप्रभृतिषु पाठात्। "मकरन्दस्य मद्यस्य माक्षिकस्य अपि वाचकः। "अर्द्धर्चादिगणे पाठात् पुंनपुंसकयोर्मधुः" इति अभिधानात्। षट्पदाली षट्पदावलिः उपान्तिके यानि नीपानि कदम्बकुसुमानि तेषां रेणुभिः परागैः कीर्णं व्याप्तं, किञ्च स्वतः अपि सह रजसा सरजसं न तु अरजस्कम् इति भावः। साकल्ये अव्ययीभावः। "अचतुर" इत्यादिना निपातः। केतकीनां प्रसवं पुष्पम् अपहाय विनीलबन्धनानि नलिनवृन्तानि असनानि प्रियकपुष्पाणि मकरन्दभरितानि इति शेषः। "सर्जकासनवन्धूकपुष्पप्रियकजीवकाः" इत्यमरः। मलिनयति स्म यथा वृन्तात् अन्यत्र अपि मालिन्यं स्यात् तथा मधु-

मुकुलितमतिशय्य बन्धुजीवं
धृतजलबिन्दुषु शाद्वलस्थलीषु ।
अविरलवपुषः सुरेन्द्रगोपाः
विकचपलाशचयश्रियं समीयुः ॥ २७ ॥

अविरलफलिनीवनप्रसूनः
कुसुमितकुन्दसुगन्धिगन्धवाहः ।
गुणमसमयजं चिराय लेभे
विरलतुषारकणस्तुषारकालः ॥ २८ ॥

शोभात् छादयामास इत्यर्थः । न हि मध्वासक्तः मधुलाभे भ्रमति विभूतिषु आमज्जति इति भावः ॥२६॥

मुकुलितमिति । धृताः जलबिन्दवः यासु तासु शाद्वलस्थलीषु शाद्वलान्वितप्रदेशेषु अविरलवपुषः स्थूलमूर्त्तयः सुरेन्द्रगोपाः कीटविशेषाः मुकुलितं बन्धुजीवं बन्धुजीवकमुकुलम् इत्यर्थः । "बन्धूको बन्धुजीवकः" इत्यमरः । अतिशय्य अतिक्रम्य विकच पलाशचयः विकसितकिंशुकराशिः । "पलाशे किंशुकः पर्णः" इत्यमरः । तस्य श्रियं तत्सदृशीं श्रियम् इत्यर्थः । अत एव निदर्शनालङ्कारः । समीयुः प्रापुः ॥२७॥

अथ हेमन्तवर्णनम् आह । अविरलेति । अविरलानि घनानि फलिनीवनानां प्रियङ्गुवनानां प्रसूनानि यस्मिन् सः । "प्रियङ्गुः फलिनी फली" इत्यमरः । कुसुमितैः कुन्दैः माघ्यकुसुमैः सुगन्धिः गन्धवाहः यस्मिन् सः । "माघ्यं कुन्दम्" इत्यमरः । शिशिराणाम् अपि कुन्दानां हेमन्ते प्रादुर्भावात् अविरोधः । विरलतुषारकणः इति प्रारम्भोक्तिः । तुषारकालः

निचयिनि लवलीलताविकाशे
जनयति लोध्रसमीरणे च हर्षम्।
विकृतिमुपययौ न पाण्डुसूनुः
चलति नयान्न जिगीषतां हि चेतः ॥२९॥

कतिपयसहकारपुष्परम्यः
तनुतुहिनोऽल्पविनिद्रसिन्दुवारः।
सुरभिमुखहिमागमान्तशंसी
समुपययौ शिशिरः स्मरैकबन्धुः ॥ ३० ॥

हेमन्तः चिराय असमयजम् अकालसम्भवं गुणम् उत्कर्षं लेभे ॥२८॥

निचयिनीति। निचयिनि उपचयवति लवलीलतानां विकाशे पुष्पविजृम्भणे तथा लोध्रसमीरणे च हर्षं प्रसादम् उत्कण्ठाम् इति यावत् जनयति सति पाण्डुसूनुः विकृतिं न उपययौ। कुतः? हि यस्मात् जिगीषतां जेतुम् इच्छतां चेतः नयात् नीतिः न चलति न हि क्रोधाक्रान्ते चेतसि शृङ्गाररसस्य विकाशः तद्विरुद्धत्वात् रोषस्य इति भावः ॥२९॥

कतिपयैरिति। कतिपयैः एव सहकारपुष्पैः चूतकुसुमैः रम्यः न तु वसन्तवत् समग्रैः न अपि हेमन्तवत् तद्रहितैः इति भावः। तनुतुहिनः अल्पहिमः न तु हेमन्तवत् बहुतुहिनः न अपि वसन्तवत् विरलतुहिनः इति भावः। अल्पानि कतिपयानि विनिद्राणि सिन्दुवाराणि विकसितनिर्गुण्डीकुसुमानि यस्मिन् सः। अत्र अपि सहकारवत् अभिप्रायः द्रष्टव्यः। "सिन्दुवारेन्द्रसुरसौ निर्गुण्डीन्द्राणिकेत्यपि" इत्यमरः। इत्थं सुरभिमुख

कुसुमनगवनान्युपैतुकामा
किसलयिनीमवलम्ब्य चूतयष्टिम् ।
क्वणदलिकुलनूपुरा निरासे
नलिनवनेषु पदं वसन्तलक्ष्मीः ॥ ३१ ॥
विकसितकुसुमाधरं हसन्तीं
कुरवकराजिवधूं विलोकयन्तम् ।

वसन्तप्रारम्भं हिमागमान्तं हेमन्तावसानं च शंसति सूचयति इति सः तथोक्तः स्मरस्य एकबन्धुः सहकारी उभयर्त्तुधर्मसम्पत्तेः इति भावः । शिशिरं समुपययौ ॥३०॥

अथ वसन्तप्रारम्भम् आह । कुसुमेति । कुसुमप्रधानानां नगानां वृक्षाणां कुसुमानां नगाः वृक्षाः वा तेषां वनानि उपैतुम् आरोढुं कामः यस्याः सा । "शैलवृक्षौ नगावगौ" इत्यमरः। "लुम्पेदवश्यं मः कृत्ये तुं काममनसोरपि" इति मकारलोपः । वसन्तलक्ष्मीः किसलयिनीं पल्लविनीं चूतयष्टिं चूतशाखाम् इव इति भावः । अवलम्ब्य अवष्टभ्य अन्यथा आरोढुम् अशक्यत्वात् इति भावः । क्वणत् शिञ्जमानं शब्दायमानम् अलिकुलं नूपुरम् इव यस्याः सा तथोक्ता सती । "क्वणदलिकुलनूपुरम्" इत्यपि पाठः । अन्यत्र अलिकुलवत् नूपुरं नलिनवनेषु पदं निरासे निदधे । तेषु प्रथमं प्रादुरासीत् इत्यर्थः । "उपसर्गादस्यत्यूह्योर्वा" इति वचनात् आत्मनेपदम् । अत्र प्रक्रान्तवसन्तलक्ष्मीविशेषणसामर्थ्यात् अप्रस्तुतनायिकाव्यवहारसमारोपात् समासोक्तिः अलङ्कारः ॥३१॥

विकसितेति । विकसितः विश्लिष्टः कुसुमम् एव अधरः यस्मिन् कर्मणि यत् यथा तथा हसन्तीं स्मयमानां कुरवक-

ददृशुरिव सुराङ्गना निषण्णं
सशरमनङ्गमशोकपल्लवेषु॥ ३२॥
मुहुरनुपतता विधूयमानं
विरचितसंहति दक्षिणानिलेन।
अलिकुलमलकाकृतिं प्रपेदे
नलिनमुखान्तविसर्पि पङ्कजिन्याः॥ ३३॥
श्वसनचलितपल्लवाधरोष्ठे
नवनिहितेर्ष्यमिवावधूनयन्ती।

भाजिः एव वधूः तां विलोकयन्तं कामुकतया इति भावः। अत एव अशोकपल्लवेषु पल्लवसंस्तरेषु निषण्णं स्थितम् इत्यर्थः। विरंमया इति शेषः। सशरं नित्यविजयित्वात् इति भावः। अत्य शृङ्गारवीरयोः एकाधिकरणभूतम् अनङ्गं सुराङ्गनाः ददृशुः इव इति उत्प्रेक्षा। अशोकाद्यवलोकनात् मदन साक्षात्कारात् इव महान् मनःक्षोभः तासाम् आसीत् इत्यर्थः। अत्र रूपकोत्प्रेक्षयोः संसृष्टिः॥३२॥

मुहुरिति। अनुपतता अनुधावता दक्षिणानिलेन मलयमारुतेन मुहुः विधूयमानं कम्पितम् अत एव विरचिता संहतिः येन तत्सम्भृतम् इत्यर्थः। पङ्कजिन्याः यत् नलिनं मुखम् इव तस्य अन्तः विसर्पि प्रान्तचारि अलिकुलं कर्त्तृ अलकाकृतिम् अलकसादृश्यं प्रपेदे॥३३॥

श्वसनेति। षट्पदेन शालतता सर्जतरुशाखा वधूः इव शाललतावधूः। "प्राकारग्रहयोः शालः शालः सर्जतरुः स्मृतः" इति शाश्वतः। श्वसनेन वायुना निःश्वासेन च चलितः पल्लवः

मधुसुरभिणि षट्पदेन पुष्पे
मुख इव शाललताबधूः सुचुम्बे ॥ ३४ ॥

प्रभवति न तदा परो विजेतुं
भवति जितेन्द्रियता यदात्मरक्षा
अवजितभुवनस्तथाहि लेभे
सिततुरगे विजयं न पुष्पमासः ॥ ३५ ॥

कथमिव तव सम्मतिर्भवित्री
सममृतुभिर्मुनिनावधीरितस्य ।

अधरोष्ठः इव यत्र तस्मिन् । "ओत्वोष्ठयोः समासे वा" इति पररूपं वक्तव्यम् । मधुना मकरन्देन मद्येन च सुरभिणि पुष्पे मुखे इव नवं यथा तथा निह्नितेर्ष्यं कृतकोपम् इव इति क्रिया-विशेषणम् । तथा अवधूनयन्ती कम्पयन्ती । "धूञ्प्रीञोर्नुग् वक्तव्यः" इति णिचि नुमागमः । चुचुम्बे चुम्बिता । अत्र स्तनशब्दार्थमधुशब्दार्थयोश्च स्वस्वभेदाध्यवसायात् श्लेषमूला-तिशयोक्तिः । सा च उपमाङ्गम् इति अनयोः सङ्करः ॥३४॥

प्रभवतीति । परः शत्रुः तदा तस्मिन् काले विजेतु न प्रभवति न शक्नोति । यदा जितेन्द्रियता जितेन्द्रियजयित्वम् आत्मरक्षा भवति जायते । तथाहि । अवजितभुवनः त्रैलोक्य-विजयी पुष्पमासः वसन्तः सिततुरगे अर्जुने विषये विजयं न लेभे । अतः जितेन्द्रियाः दुर्जयाः इत्यर्थः । विशेषेण सामा-न्यार्थसमर्थनरूपः अर्थान्तरन्यासः अलङ्कारः ॥३५॥

अथ ग्रीष्मं वर्णयति । कथमिति । विरचितमल्लिकाविकाश-निदाघकालः ग्रीष्मः ऋतुभिः वर्षादिभिः समं मुनिना अवधी

इति विरचितमल्लिकाविकाशः
स्मयत इव स्म मधुं निदाघकालः ॥ ३६ ॥
बलवदपि बलं मिथो विरोधि
प्रभवति नैव विपक्षनिर्जयाय ।
भुवनपरिभवो न यत्तदानीं
तमृतुगणः क्षणमुन्मनीचकार ॥ ३७ ॥

रितस्य तिरस्कृतस्य तव सम्मतिः लोके योग्यत्वेन अनुमति. मान्यत्वं कथम् इव भवित्री ? न सम्मानः कथञ्चित् भविष्यति इत्यर्थः। इति इत्थं मधुः वसन्तः "चैत्रे दैत्ये वसन्ते च जीवे कौके मधुः स्मृतः." इति विश्वः। स्मयते स्म इव जहास किम् ? इति उत्प्रेक्षा।"लट् स्मे"इति भूतार्थे लट्। प्रहासस्य शुभ्रत्वेन प्रसिद्धेः मल्लिकाविकाशे हासत्वाध्यवसायः। अत्र ऋतुभि. समम् अवधीरितस्य इत्यत्र अभेदाध्यवसायमूला सहोक्तिः अलङ्कारः। सम्बन्धभेदभिन्नस्य अवधीरणस्य अभिन्नतया अध्यवसायात् तत् एव अवधीरणम् सम्मतिद्वारा स्मयोत्प्रेक्षा इति अनयोः अङ्गाङ्गिभावेन सङ्करः ॥३६॥

बलवदिति। बलवत् प्रबलम् अपि प्रकृष्टगामि इति यावत्। मिथः विरोधि परस्परस्पर्द्धि बलं सैन्यम्। "वरूथिनी बलं सैन्यम्" इत्यमरः। विपक्षनिर्जयाय शत्रुविजयाय।"तुमर्थाच्च" इत्यादिना चतुर्थी। शत्रून् जेतुम् इत्यर्थः न प्रभवति न शक्नोति एव। कुतः ? यत् यस्मात् कारणात् भुवनानां परिभवी जेता अपि। "जिदृक्षि" इत्यादिना इनुप्रत्ययः। ऋतुगणः तदानीं तम् अर्जुनं क्षणम् अपि न उन्मनीचकार अनुन्मनसम् उन्मनसं न चकार। "अरुर्मनश्चक्षुः" इत्यादिना

**अपवादादभीतस्य समस्य गुणदोषयोः ।**
**असद्‌वृत्तेरहो वृत्तं दुर्विभावं विधेरिव ॥५६॥**
**ध्वंसेत हृदयं सद्यः परिभूतस्य मे परैः ।**
**यद्यमर्षः प्रतीकारं भुजालम्बं न लम्भयेत् ॥५७॥**
**अवधूयारिभिर्नीता हरिणैस्तुल्यवृत्तिताम् ।**

यस्मात् असन्मैत्री दुर्जनेन सङ्गतिः कूलस्य आसन्नपातस्य नदीतटस्य छाया इव सेविता स्थिता सती दोषाय अनर्थाय भवति। न खलु दुर्जनः सुजनवत् मित्रद्रोहपातकं पश्यति इति भावः। उपमाप्राणितः अयम् अर्थान्तरन्यासः अलङ्कारः ॥५५॥

ननु आदौ एव तेषां वृत्तम् अविज्ञाय कथं मैत्री कृता इति आशङ्क्य किं कुर्मः दुर्जनवृत्तं दुर्विज्ञेयम् इति आह। अपवादादिति। अपवादात् जनाक्रोशात् अभीतस्य अजुगुप्समानस्य इत्यर्थः। गुणदोषयोः समस्य तुल्यबुद्धेः निग्रहानुग्रहौ गुणदोषयोः अननुरुन्धतः इत्यर्थः। विधौ अपि एतत् विशेषणं योज्यम्। असद्वृत्तेः दुराचारस्य धूर्त्तस्य वृत्तम् ईहितं विधेः दैवस्य वृत्तम् इव दुर्विभावं विभावयितुम् अशक्यम्। किन्तु कार्य्यैकसमधिगम्यम् इत्यर्थः। भवतेः खलन्तात् कृच्छ्रार्थे खल्प्रत्ययः ॥५६॥

ननु एवं मानी कथं परिभूतः जीवसि तत्र आह। ध्वंसेतेति। परैः शत्रुभिः परिभूतस्य मे हृदयं सद्यः ध्वंसेत भ्रश्येत् इत्यर्थः। अमर्षः कर्त्ता प्रतीकारं प्रतिक्रियारूपं भुजालम्बं हस्तावलम्बनं न लम्भयेत् न ग्राहयेत् यदि हृदयेन इति शेषः। सत्यं जीवामि प्रतिविधित्सया न तु निर्लज्जतया इति भावः॥५७॥

ननु तव एव कः अयम् अभिमानः? तत्र आह। अव-

अन्योन्यस्यापि जिह्रीमः किं पुनः सहवासिनाम्॥५८॥

शक्तिवैकल्यनम्रस्य निःसारत्वाल्लघीयसः।
जन्मिनो मानहीनस्य तृणस्य च समा गतिः॥५९॥

अलङ्घ्यं तत्तदुद्वीक्ष्य यत् यदुच्चैर्महीभृताम्।
प्रियतां ज्यायसीं मा गात् महतां केन तुङ्गता॥६०॥

धृयेति। अरिभिः अवधूय परिभूय हरिणैः मृगैः तुल्यवृत्तितां तुल्यवृत्तिजीवनत्वं वन्याहारताम् इत्यर्थः। नीताः प्रापिताः वयं पञ्च अपि इति शेषः। अन्योन्यस्य अपि जिह्रीमः लज्जामहे। सहवासिनां सहचारिणां किं पुनः? प्राक् एव जिह्रीम इति किम् वक्तव्यम्? इत्यर्थः। क्रियायोगे सम्बन्धसामान्ये षष्ठी। अत्र वयं पञ्च अपि तुल्याभिमानाः इव इदं तु मदेकसाध्यं कर्म इति मुनिशासनात् मया अनुष्ठीयते इति भावः॥५८॥

ननु तर्हि दुःखैकनिदानम् अन्तःशत्रुः मानः एव त्यज्यताम्? इति आशङ्क्य तत्त्यागे दोषम् आह। शक्तीति। शक्तिवैकल्ये न उत्साहादिशक्तिवैधुर्येण अवष्टम्भसामर्थ्यविरहेण च नम्रस्य प्रह्वीभूतस्य विधेयभूतस्य च निःसारत्वात् दुर्बलत्वात् स्थिरांशरहितत्वात् च। "सारो बले स्थिरांशे च" इत्यमरः। लघीयसः गौरवहीनस्य नीरसस्य इत्यर्थः। मानहीनस्य जन्मिनः जन्तोः। व्रीह्यादित्वात् इनिः। तृणस्य च गतिः अवस्था समा इति। मानहीनस्य तृणात् अपि निकृष्टत्वात् न त्याज्यः मानः इति भावः। श्लेषालङ्कारः अयं तदनुप्राणिता इयम् उपमा इति अनेकार्थदीपिका इति व्यज्यते॥५९॥

मानत्यागे दोषम् उक्त्वा तत्सद्भावे षड्भिः गुणम् आह। अलङ्घ्यमिति। महीभृतां पर्वतानां सम्बन्धि यत् यत् शृङ्गादि-

तावदाश्रीयते लक्ष्म्या तावदस्य स्थिरं यशः ।
पुरुषस्तावदेवासौ यावत् मानात् न हीयते॥६१॥
स पुमानर्थवज्जन्मा यस्य नाम्नि पुरःस्थिते ।
नान्यामङ्गुलिमभ्येति सङ्ख्यायामुद्यताङ्गुलिः॥६२॥

कम् उच्चैः उन्नतं तत् तत् अलङ्घ्यम् उद्वीच्य उत्प्रेक्ष्य तर्कयित्वा इति यावत् । महतां महात्मनां तुङ्गता मानोन्नत्वं ज्यायसी प्रियता प्रियत्वं केन हेतुना मागात् ? न केन अपि प्रियत्वं गच्छति एव इत्यर्थः । किन्तु तुङ्गत्वेन इत्यर्थः । आशिषि माङि लुङ् । दैवम् अनिच्छन् अपि इच्छाम् उत्पादयति औषधवत् अस्मिन् अर्थे इति आशंसनार्थम् आशीःप्रयोगः । उद्वीच्य इति असमानकर्तृकत्वनिर्देशः क्वचित् प्रयोगदर्शनात् सोढव्यः । केचित् उद्वीच्यम् इति पठन्ति । तत्र यत् यत् उच्चैः तत् अलङ्घ्यम् उद्वीच्यम् अवलोकनीयं न च उल्लङ्घनीयम् इति । अतः महताम् इत्यादि योजयन्ति ॥६०॥

तावदिति । किञ्च तावत् एव असौ लक्ष्म्या आश्रीयते । तावत् अस्य पुंसः यशः स्थिरम् । तावत् एव असौ पुरुषः । पुरुषत्वेन गण्यते इत्यर्थः । यावत् मानात् अभिमानात् न हीयते न भ्रंश्यति । मानहीनस्य न किञ्चित् शुभम् अस्ति इत्यर्थः ॥६१॥

स इति । सः पुमान् अर्थवज्जन्मा सार्थकजन्मा यस्य पुंसः नाम्नि पुरः अग्रे स्थिते सति संख्यायां पुरुषगणनाप्रस्तावे उद्यता गुणम् अधिकृत्य उन्नमिता अङ्गुलिः अन्यां द्वितीयाम् अङ्गुलिम् उद्यताम् इति शेषः । न अभ्येति न प्राप्नोति । अद्वितीयत्वात् अस्य इत्यर्थः । एतत् मानरहितस्य न सम्भवतीति भावः ॥६२॥

दुरासदवनज्यायान् गम्यस्तुङ्गोऽपि भूधरः ।
न जहाति महौजस्कं मानप्रांशुमलङ्घता ॥६३॥
गुरून् कुर्वन्ति ते वंश्यान् अन्वर्था तैर्वसुन्धरा ।
येषां यशांसि शुभ्राणि ह्रेपयन्तीन्दुमण्डलम् ॥६४॥
उदाहरणमाशीःषु प्रथमे ते मनस्विनाम् ।
शुष्केऽशनिरिवामर्षो यैररातिषु पात्यते ॥६५॥

दुरासदेति। दुरासदैः वनैः ज्यायान् प्रवृद्धः तथापि तुङ्गः अपि भूधरः गम्यः गन्तुं शक्यः एव प्रसिद्धं च एतत् इति भावः। महौजस्कं प्रतापसम्पन्नं मानप्रांशुं मानोन्नतं पुरुषम् इति शेषः। अलङ्घता न जहाति न कदाचित् मानो लङ्घयितुं शक्यते इत्यर्थः। गिरेः अपि गरीयान् मानाधिकः इति भावः। अत्र उपमानात् भूधरात् उपमेयस्य मानिनः धर्मान्तरसाम्ये अलङ्घ्यत्वेन आधिक्यकथनात् व्यतिरेकालङ्कारः ॥६३॥

गुरूनिति। ते नराः वंश्यान् अन्वयभवान् गुरून् कुर्वन्ति प्रथयन्ति। स्वनाम्ना व्यपदेशयन्ति रघुदिलीपादिवत् इत्यर्थः; तैः नरैः वसूनि धनानि धरति इति वसुन्धरा। "संज्ञायां भृतॄवृजि" इत्यादिना खच्प्रत्यये "खचि ह्रस्वः" इति ह्रस्वात् नुमागमश्च। अन्वर्था अनुगतार्था तेषां वसुभूतानां धारणात् इति भावः। येषां शुभ्राणि यशांसि इन्दुमण्डलं ह्रेपयन्ति लज्जयन्ति यशसः निष्कलङ्कत्वात् इति भावः। ईदृशं हि यशः मानमहतः एव सम्भवति इति तात्पर्य्यार्थः। ह्रीधातोः ण्यन्तात् लट्। "अर्त्तिह्री" इत्यादिना पुमागमः। अत्र ह्रेपणस्य सादृश्यपर्य्यवसानात् उपमालङ्कारः ॥६४॥

उदाहरणमिति। यैः अमर्षः क्रोधः शुष्के नीरसे अशनिः

**न सुखं प्रार्थये नार्थमुदन्वद्वीचिचञ्चलम्।**
**नानित्यताशनेस्त्रस्यन् विविक्तं ब्रह्मणः पदम्॥६६॥**
**प्रमार्ष्टुमयशःपङ्कमिच्छेयं छद्मना कृतम्।**
**वैधव्यतापिताराातिवनितालोचनाम्बुभिः॥६७॥**
**अपहस्येऽथवा सद्भिः प्रमादो वास्तु मे धियः।**

इव अरातिषु विषये पात्यते प्रक्षिप्यते। मनस्विनां मानिनां प्रथमे अग्रेसराः ते आशीःषु पुरुषैः एवं भवितव्यम् एवं रूपासु उदाहरणं निदर्शनं भवति इति शेषः। रामादिवत् उपमानं भवति इत्यर्थः। अतः न त्याज्यः मानः इति सन्दर्भार्थः ॥६५॥

यत् उक्तम् "अभिद्रोहेण भूतानाम्" इत्यादि तत्र युग्मेन उत्तरम् आह। नेत्यादि। उदन्वद्वीचिः इव चञ्चलं समुद्र-तरङ्गवत् अस्थिरं सुखं कामं न प्रार्थये न इच्छामि। तथा चञ्चलम् अर्थञ्च न प्रार्थये। किञ्च अनित्यता विनाशिता सा एव अशनिः तस्मात् त्रस्यन् बिभ्यत्। "वा भ्राश" इत्यादिना श्यन्-प्रत्ययः। विविक्तं निर्बाधं ब्रह्मणः वेधसः आत्मनः पद्यते इति पदं स्थानम् ऐक्यलक्षणं मुक्तिञ्च न प्रार्थये। एतेन यत् उक्तम् "उच्छेदं जन्मनः कर्त्तुम्" इत्यादिना तत् समाहितम् ॥६६॥

प्रमार्ष्टुमिति। किन्तु छद्मना कपटेन कृतं शत्रुभिः इति शेषः। अयशः एव पङ्कम् इति रूपकालङ्कारः। वैधव्येन तापितानां दुःखीकृतानाम् अरातिवनितानां लोचनाम्बुभिः प्रमार्ष्टुं क्षालयितुम् इच्छेयम् अभिलषेयम्। इषिधातोः लिङि रूपम्। वैरनिर्यातनातिरिक्तं न किञ्चित् इच्छामि इत्यर्थः॥६७

एवं तर्हि "यः करोति वधोदर्काः" इत्युक्तदोषः स्यात्? इति आशङ्काम् अङ्गीकृत्य ग्लानिः न दोषाय इति न्यायम्

नाम यस्याभिनन्दन्ति द्विषोऽपि स पुमान् पुमान्॥७३

युग्मम्।

यथाप्रतिज्ञं द्विषतां युधि प्रतिचिकीर्षया।
ममैवाध्येति नृपतिस्तृष्यन्निव जलाञ्जलेः ॥७४॥

स वंशस्यावदातस्य शशाङ्कस्येव लाञ्छनम्।
कृच्छ्रेषु व्यर्थया यत्र भूयते भर्त्तुराज्ञया ॥७५॥

ग्रसमानमिति। किञ्च सदसा सभया गौरवेण ईरितं कथाप्रसङ्गेषु गौरवपूर्वकम् उच्चारितं सत् ओजांसि शृण्वतां तेजांसि ग्रसमानं गिलत् इव स्थितं यस्य पुंसः नाम द्विषोऽपि अभिनन्दन्ति अनुमोदन्ते किमुत सुहृदः? इति भावः। सः पुमान् पुमान् पुरुषत्वेन गण्यते इत्यर्थः। प्रथमः पुरुषशब्दः जातिवचनः द्वितीयः गुणवचनः सः एव श्लाघ्यः। अत्र पुमान् पुमान् इति तात्पर्य्यमात्रभेदभिन्नशब्दार्थपौनरुक्त्यलक्षणः लाटानुप्रासः अलङ्कारः। तथाच सूत्रम्—"तात्पर्य्यभेदयुक्तो लाटानुप्रासः" इति ॥ ७३ ॥

ननु सत्सु भीमादिषु तव एव अयं कः अभिनिवेशः? इत्यत आह। यथेति। नृपतिः युधिष्ठिरः यथाप्रतिज्ञं युधि द्विषतां प्रतिचिकीर्षया द्विषतः प्रतिकर्त्तुम् इच्छया प्रतिज्ञानुसारेणैव जिघांसया इत्यर्थः। तृष्यन् पिपासुः जलाञ्जलेः इव ममैव अध्येति इच्छति कार्य्यसिद्धेः मदायत्तत्वात् माम् एव स्मरति अतः अयं मम अभिनिवेशः इत्यर्थः। "अधीगर्थ" इत्यादिना कर्मणि षष्ठी ॥७४॥

ननु युधिष्ठिरः स्वार्थं साधयति त्वया च स्वार्थमात्रम् अनुसन्धीयताम्? इत्यत आह। स इति। स नरोऽवदातस्य स्वच्छस्य

**कथं वा दीयतामर्वाङ्मुनिता धर्मरोधिनी ।**
**आश्रमानुक्रमः पूर्वैः स्मर्य्यते न व्यतिक्रमः ॥७६॥**
**आसक्ता धूरियं रूढ़ा जननी दूरगा च मे ।**
**तिरस्करोति स्वातन्त्र्यं ज्यायांश्चाचारवान् नृपः॥७७॥**

वंशस्य शशाङ्कस्य इव लाञ्छनं कलङ्कः । यत्र यस्मिन् पुरुषे कृच्छ्रेषु व्यसनेषु भर्त्तुः स्वामिनः आज्ञया अर्थया भूयते । भावे लट् । आपदि स्वार्थसाधकः कुलघातकः तत् कथं स्वार्थनिरकार्य्यिता युक्ता इत्यर्थः ॥७५॥

यदुक्तम् "विजहीहि रणोत्साहम्" इत्यादि तत्रोत्तरमाह । कथमिति । धर्मरोधिनो धर्मविरोधिनो अर्वाक् गार्हस्थ्यात् प्राक् एव मुनिता वानप्रस्थत्वं चतुर्थाश्रमता वा वर्णक्रमेण तस्य विधानात् "त्रयाणां वर्णानां वेदमधीत्य चत्वार आश्रमाः" इति सूत्रकारवचनात् च क्षत्रियस्य अपि कैश्चित् इष्टत्वात् तत् एतत् सम्यक् विवेचितम् अस्माभिः रघुवंशसञ्जीवन्यां "स किलाश्रममन्त्यमाश्रितः" इत्यत्र । कथं वा आदीयतां मया कथं वा अङ्गीक्रियताम् ? सम्प्रश्ने लोट् । तथाहि । पूर्वैः मन्वादिभिः आश्रमानुक्रमः स्मर्य्यते । न तु व्यतिक्रमः । "ब्रह्मचारी भूत्वा गृही भवेत् गृही भूत्वा वनी भवेत् वनी भूत्वा प्रव्रजेत्" इति श्रुत्यनुसारात् इत्यर्थः । एतत् अपि "चत्वार आश्रमाः" इत्येतत् पक्षम् आश्रित्य उक्तम् । यदि चेत् वैराग्यं तदा ब्रह्मचर्य्यात् एव प्रव्रजेत् गृहात् वनात् वेति व्युत्क्रमपक्षस्य अपि श्रवणात् । सामान्येन विशेषसमर्थनरूपः अर्थान्तरन्यासः॥७६॥

**ननु भवान् गृहस्थ एव तत्कथम् अर्वाङ् मुनित्वविरोधः ? इति आशङ्क्य सत्यं गृहस्थः अस्मि तथापि कृतनिखिलगृहस्थ**

**स्वधर्ममनुरुन्धन्ते नातिक्रममरातिभिः।**
**पलायन्ते कृतध्वंसा नाहवान्मानशालिनः॥७८॥**
**विच्छिन्नाभ्रविलायं वा विलीये नगमूर्द्धनि।**
**आराध्य वा सहस्राक्षमयशःशल्यमुद्धरे॥७९॥**

कर्त्तव्यस्य एव वानप्रस्थाधिकारः न गृहस्थमात्रस्य। न च अहम् अद्यापि कृतकृत्यः? इति उत्तरमाह। आसक्तेति। आसक्ता लग्ना अवश्यं कर्त्तव्या इत्यर्थः। रूढ़ा प्रसिद्धा महती इत्यर्थः। इयं पूर्वोक्ता धूः वैरिनिर्य्यातनरूपा। दूरगा दूरवर्त्तिनी जननी च माता अपि। तथा नृपः अपि आचारवान् तपोऽधिकः इत्यर्थः। तत्र अपि ज्यायान् ज्येष्ठः नृपः युधिष्ठिरश्च मे मम स्वातन्त्र्यं स्वाच्छन्द्यं तिरस्करोति दूरीकरोति आश्रमं प्रतिबध्नाति इत्यर्थः। तिरस्करोति इति प्रत्यक्रम् अभिसम्बध्यते अन्यथा बहुवचनप्रसङ्गात्॥७७॥

उक्तम् अर्थम् उपसंहरति। स्वधर्ममिति। मानशालिनः। स्वधर्मं क्षात्रधर्मम् अनुरुन्धन्ते अनुवर्त्तन्ते अतिक्रमं स्वधर्मातिक्रमं न अनुरुन्धन्ते ततः किम्? अतः आह। अरातिभिरिति। अरातिभिः कृतध्वंसाः कृतापकाराः सन्तः आहवात् न पलायन्ते अयम् एव स्वधर्मानुरोधः इत्यर्थः। "उपसर्गस्यायतौ" इति रेफस्य लत्वम्। अत्र मनुः। "न निवर्त्तेत संग्रामात् क्षात्रधर्ममनुस्मरन्" इति। अत्र उत्तरवाक्यार्थं प्रति पूर्ववाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम् अलङ्कारः॥७८॥

किं बहुना मम अयं निश्चयः श्रूयताम्? इत्याह। विच्छिन्नेति। विच्छिन्नं वाताहतं यत् अभ्रं तदिव विलीय इति विच्छिन्नाभ्रविलायं यथा तथा "उपमाने कर्मणि च" इति कर्त्तरि उपपदे णमुल्। नगमूर्द्धनि अस्मिन् गिरिशृङ्गे विलीये विशीर्य्ये

इत्युक्तवन्तं परिरभ्य दोर्भ्यां
तनूजमाविष्कृतदिव्यमूर्त्तिः ।
अघोपघातं मघवा विभूत्यै
भवोद्भवाराधनमादिदेश ॥८०॥

प्रीते पिनाकिनि मया सह लोकपालैः
लोकत्रयेऽपि विहिताप्रतिवार्य्यवीर्य्यः ।
लक्ष्मीं समुत्सुकयितासि भृशं परेषाम्
उच्चार्य्य वाचमिति तेन तिरोबभूवे ॥८१॥

इति इन्द्रसमागमो नामैकादशः सर्गः ॥११॥

वा । कथादिषु यथाविध्यनुप्रयोगः । यत् वा सहस्राक्षम् इन्द्रम् आराध्य अयशः एव शल्यं तत् उद्धरे उद्धरिष्यामि । न तु गत्यन्तरशङ्का इत्यर्थः । वाशब्दः विकल्पे ॥७९॥

इतीति । मघवा इन्द्रः इत्युक्तवन्तं तनूजं पुत्रम् अर्जुनम् आविष्कृता प्रकटिता दिव्यमूर्त्तिः निजरूपं येन सः तथोक्तः सन् दोर्भ्यां बाहुभ्यां परिरभ्य विभूत्यै श्रेयसे उपहन्यते अनेन इति उपघातम् । करणे घञ्प्रत्ययः । अघानां दुःखानाम् उपघातम् अघोपघातं भवः संसारः तस्य उद्भवः कारणम् इति भवोद्भवः शिवः तस्य आराधनम् उपासनम् आदिदेश शिवम् उद्दिश्य तपः चर इति आज्ञपयामास इत्यर्थः ॥८०॥

प्रीत इति । पिनाकिनि शिवे प्रीते सति लोकपालैः सह मया लोकत्रये अपि विहितं दत्तम् अप्रतिवार्य्यम् अनिवार्य्यं वीर्य्यं यस्य सः तथोक्तः सन् परेषां शत्रूणां लक्ष्मीं भृशं समुत्सुकयिता असि समुत्सुकां त्वयि अनुरक्तां कर्त्ता असि पुनः आहरि-

# द्वादशः सर्गः

अथ वासवस्य वचनेन
रुचिरवदनस्त्रिलोचनम् ।
क्लान्तिरहितमभिराधयितुं
विधिवत् तपांसि विदधे धनञ्जयः ॥ १ ॥
अभिरश्मिमालि विमलस्य
धृतजयधृतेरनाशुषः ।

ष्यामि इत्यर्थः । वीरभोग्याः सम्पदः इति भावः । तत्सुखशब्दात् "तत्करोति" इति ण्यन्तात् कर्त्तरि लुट् । इति वाचम् उक्त्वाऽथ तेन इन्द्रेण तिरोबभूवे अन्तर्दधे । भावे लिट् ॥८१॥

इति किरातार्जुनीये एकादशसर्गव्याख्या समाप्ता ।

अथेति । अथ इन्द्रतिरोधानानन्तरं रुचिरवदनः इन्द्र साक्षात्कारसन्तोषात् प्रसन्नमुखः धनञ्जयः अर्जुनः वासवस्य वचनेन उपदेशेन त्रिलोचनं शिवं क्लान्तिरहितं यथा तथा अभिराधयितुं प्रसादयितुं तपांसि विधिवत् विध्यर्हं यथाशास्त्रम् इत्यर्थः । "तदर्हम्" इति वतिप्रत्ययः । विदधे चक्रे । अस्मिन् सर्गे उद्गताहृत्तम् । "सजसादिमे सलघुकौ च नसजगुरुकैरथोद्गता । त्र्यङ्घ्रिगत भनजला गयुताः सजसाजगौ चरणमेकतः पठेत्" इति लक्षणात् ॥१॥

अभिरश्मीति । अभिरश्मिमालि अभिसूर्यं सूर्याभिमुखं भुवि एकचरणं निषीदतः एकचरणेन तिष्ठतः विमलस्य बाह्या-

तस्य भुवि बहुतिथास्तिथयः
प्रतिजग्मुरेकचरणं निषीदतः ॥ २ ॥
वपुरिन्द्रियोपतपनेषु
सततमसुखेषु पाण्डवः ।
व्याप नगपतिरिव स्थिरतां
महतां हि धैर्य्यमविभाव्यवैभवम् ॥ ३ ॥
न पपात सन्निहितपक्ति-
सुरभिषु फलेषु मानसम् ।

न्तरशुद्धिमतः। धृता जयधृतिः जयेच्छा येन तस्य अनाश्रुषः अनश्नतः "उपेयिवाननाश्वाननूचानश्च" इति निपातः। तस्य अर्जुनस्य बहूनां पूरणाः बहुतिथाः बहुसंख्यकाः इत्यर्थः।"तस्य पूरणे डट्"। बहुपूगगणसङ्घस्य तिथुक्" इति तिथुगागमः। तिथयः दिनानि प्रतिजग्मुः। अत्र तिथिशब्दः पुंलिङ्गः।"तदा-द्यास्तिथयो द्वयो" इति अभिधानात्। अन्यथा बहुतिथाः इति अत्र टित्वात् ङीप् स्यात् ॥२॥

वपुरिति। पाण्डवः अर्जुनः सततं वपुषः इन्द्रियाणां च उपतपनेषु सन्तापकरेषु। करणे ल्युट्। असुखेषु अनशनादि-दुःखेषु अपि नगपतिः गिरीन्द्रः इव स्थिरतां दार्ढ्यं व्याप प्राप। तथाहि। महतां धैर्य्यम् अविभाव्यं दुर्बोधं वैभवं सामर्थ्यं यस्य तत् तथोक्तम्। धीराणाम् अकिञ्चित्करं दुःखम् इति भावः ॥३॥

नेति। तस्य अर्जुनस्य मानसं मनः सन्निहितानि समीप-स्थानि यानि पक्तिसुरभीणि पाकसुगन्धीनि तेषु फलेषु। तथा शुचिनि स्वच्छे शिशिरे शीतले पयसि च न पपात। न

तस्य शुचिनि शिशिरे च पय-
स्यमृतायते हि सुतपः सुकर्मणाम् ॥ ४ ॥
न विसिस्मिये न विषसाद
मुहुरलसतां न चाददे ।
सत्त्वमुरुधृति रजस्तमसी
न हतः स्म तस्य हतशक्तिपेलवे ॥ ५ ॥
तपसा कृशं वपुरुवाह
स विजितजगत्त्रयोदयम् ।

किञ्चित् आचकाङ्क्ष इति भावः । प्राणधारणं तु तस्य तपः एव इत्याह । तथाहि । सुकर्मणां सुकृतिनां शोभनं तपः सुतपः एव अमृतायते अमृतवत् आचरति । किं तपस्तप्तानां तपोऽन्तरैः ? इति भावः । "लोहितादिडाज्भ्यः क्यष्" । "वा क्यषः" इति आत्मनेपदम् । लोहितादिः आकृतिगणः ॥४॥

नेति । सः अर्जुनो न विसिस्मिये अहो महत् तपः तप्तम् इति न विस्मयं जगाम । "तपः क्षरति विस्मयात्" इति स्मृतेः इति भावः ॥ न विषसाद फलविलम्बात् गतोत्साहः न बभूव । "विषादश्चेतसो भङ्गः" इति लक्षणात् । "सदिरप्रतेः" इति षत्वम् । मुहुः अलसतां तपसि मन्दोद्यमत्वं च न अगमत् । किञ्च हतशक्तिनो हतसारे अत एव पेलवे भङ्गुरे ते हतशक्तिपेलवे रजस्तमसी गुणौ उरुधृति महासारं तस्य अर्जुनस्य सत्त्वं सत्त्वगुणं न हतः स्म न हतवती । हन्तेः "लट् स्मे" इति भूतार्थे लट् ॥५॥

तपसेति । सः अर्जुनः तपसा कृशं तथापि विजितः जग

त्रासजननमपि तत्त्वविदां
किमिवास्ति यत् न सुकरं मनस्विभिः?॥६॥
ज्वलतोऽनलादनुनिशीथम्
अधिकरुचिरम्भसां निधिः।
धैर्य्यगुणमवजयन् विजयी
ददृशे समुन्नततरः स शैलतः॥७॥
जपतः सदा जपमुपांशु
वदनमभितो विसारिभिः।

त्रयस्य भुवनत्रयस्य उदयः उत्कर्षः येन तत् तथोक्तम्। किञ्च तत्त्वविदाम् अपि लोकहितार्थं तत्त्वं जानताम् अपि त्रास-जननं भयङ्करं वपुः उवाह वहति स्म। न च एतत् चित्रम् इत्याह। किमिति। यत् मनस्विभिः न सुकरं तत् किम् इव अस्ति? न किम् अपि इत्यर्थः। इवशब्दः वाक्यालङ्कारे। "मनस्विनाम्" इति पाठे अपि स्यात् एव कृद्योगलक्षणायाम् "न लोक" इत्यादिना निषेधात्॥६॥

ज्वलत इति। विजयी सः अर्जुनः अनुनिशीथम् अर्द्धरात्रे। विभक्त्यर्थे अव्ययीभावः। "अर्द्धरात्रनिशीथौ द्वौ" इत्यमरः। ज्वलतः दीप्यमानात् अनलात् अधिकरुचिः तथा अम्भसां निधिः धैर्य्यं गाम्भीर्य्यं तत् एव गुणः तम् अवजयन्। किञ्च शैलतः शैलात् अपि समुन्नततरः ददृशे। अत्र रुच्यादिभिः अनला-द्याधिक्यासम्बन्धे सम्बन्धाभिधानात् अतिशयोक्तिः अलङ्कारः॥७॥

जपत इति। सदा उपांशु रहो गूढ़म् इत्यर्थः। "रहस्या-पांशु चालिङ्गे" इत्यमरः। "करणवदशब्दमनुप्रयोग उपांशु" इति कौमारं लक्षणम्। जप्यते इति जपः तं जपं मन्त्रम् इत्यर्थः।

तस्य दशनकिरणैः शुशुभे
परिवेषभीषणमिवार्कमण्डलम् ॥८॥

कवचं स बिभ्रदुपवीत-
पदनिहितसज्यकार्मुकः ।
शैलपतिरिव महेन्द्रधनुः-
परिवीतभीमगहनो विदिद्युते ॥९॥

प्रविवेश गामिव कृशस्य
नियमसवनाय गच्छतः ।
तस्य पदविनमितो हिमवान्
गुरुतां नयन्ति हि गुणा न संहतिः ॥ १० ॥

जपतः पठतः तस्य अर्जुनस्य वदनं कर्तृ अभितः विसारिभिः दशनकिरणैः हेतुभिः परिवेषभीषणम् अर्कमण्डलम् इव शुशुभे। "परिवेषस्तु परिधिरुपसूर्य्यकमण्डले" इत्यमरः ॥८॥

कवचमिति। कवचं वर्म बिभ्रत् उपवीतपदे यज्ञोपवीतस्थाने निहितं सज्यं कार्मुकं येन सः तथोक्तः सः अर्जुनः महेन्द्रधनुषा परिवीतं परिवेष्टितं भीमं गहनं वनं यस्य सः शैलपतिः इव विदिद्युते शुशुभे ॥९॥

प्रविवेशेति। नियमसवनाय नियमस्नानाय। "सवनं त्वध्वरे स्नाने सोमनिर्दलनेऽपि च" इति विश्वः। गच्छतः कृशस्य तस्य अर्जुनस्य पदैः पादन्यासैः विनमितः हिमवान् गां भुवं प्रविवेश इति उत्प्रेक्षा। ननु कृशस्य कथम् इयत् गौरवम्? तत्र आह। गुणाः सारादयः गुरुतां नयन्ति प्रापयन्ति हि। संहतिः सङ्घातः मूर्त्तिः इति यावत् न नयति। अन्तःसारात्

परिकीर्णमुद्यतभुजस्य
भुवनविवरे दुरासदम् ।
ज्योतिरुपरि शिरसो विततं
जगृहे निजान् मुनिदिवौकसां पथः ॥११॥

रजनीषु राजतनयस्य
बहुलसमयेऽपि धामभिः ।
भिन्नतिमिरनिकरं न जहे
शशिरश्मिसङ्गमयुजा नभःश्रिया ॥ १२ ॥

महता मयूखनिचयेन
शमितरुचि जिष्णुजन्मना ।

ह्नि गौरवं भवति न तु वाह्यात् स्थौल्यात् । तत्र च हेमपिण्ड-तूलपिण्डौ एव निदर्शनम् इति भावः ॥१०॥

परिकीर्णमिति । उद्यतभुजस्य ऊर्द्ध्वबाहोः तस्य शिरसः उपरि । "षष्ठ्यतसर्थप्रत्ययेन" इति षष्ठी । विततं विस्तृतं भुवनयोः विवरे द्यावापृथिव्योः अन्तराले परिकीर्णं व्याप्तम् । दुरासदं दुर्धर्षं ज्योतिः तेजः मुनीनां दिवौकसां च निजान् नियतान् पथः मार्गान् जगृहे प्रतिबबन्ध इत्यर्थः ॥११॥

रजनीष्विति । बहुलसमये कृष्णपक्षे अपि रजनीषु राजतनयस्य अर्जुनस्य धामभिः तेजोभिः भिन्नः तिमिरनिकरः यस्य तत् नभः शशिरश्मीनां सङ्गमेन हेतुना युजा सङ्गतया श्रिया तत्तौल्यया श्रिया इत्यर्थः । अत एव निदर्शनालङ्कारः । न जहे न त्यक्तम् । जहातेः कर्मणि लिट् । ज्योत्स्नातुल्यज्योतिः इत्यर्थः ॥१२॥

क्लीतमिव नभसि वीतमले
न विराजते स्म वपुरंशुमालिनः॥ १३॥
तमुदीरितारुणजटांशुम्
अधिगुणशरासनं जनाः।
रुद्रमनुदितललाटदृशं
ददृशुर्मिमन्थिषुमिवासुरीः पुरीः॥ १४॥
मरुतां पतिः स्विदहिमांशुः
उत पृथुशिखः शिखी तपः।

महतेति। जिष्णोः अर्जुनात् जन्म यस्य तेन। जन्मोत्तरपद अधिकरणः बहुव्रीहिः। महता मयूखनिचयेन शमितरुचि हृतप्रभम् अंशुमालिनः वपुः अर्कविम्बं क्लीतं जितत्वात् लज्जितम् इव इति उत्प्रेक्षा। वीतमले मेघनीहाराद्यावरणरहिते अपि इत्यर्थः। नभसि न विराजते स्म॥१३॥

तमिति। उदीरिताः उद्गताः अरुणाः जटानाम् अंशवः यस्य तम् अधिगुणम् अधिज्यं शरासनं यस्य तम् अर्जुनं जनाः सिद्धगणाः। आसुरीः असुरसम्बन्धिनीः पुरीः मिमन्थिषुं मथितुम् इच्छुम्। मथेः सन्नन्तात् उप्रत्ययः। तथा अनुदिता ललाटे दृक् यस्य तं साक्षात् त्रिपुरविजयोद्यतम् अभालाक्षं रुद्रमिव ददृशुः। अत्र अभालाक्षस्य रुद्रस्य असम्भवात् स्वतःसिद्धोपमानासिद्धेः न इयम् उपमा किन्तु उत्प्रेक्षा। सा च अभालाक्षम् इति उपमानात् उपमेयस्य न्यूनत्वकथनार्थं अन्वयव्यतिरेकेण उज्जीविता इति अनयोः अङ्गाङ्गिभावेन सङ्करः। उपमा तु व्यज्यते इति अलङ्कारेण अलङ्कारध्वनिः॥१४॥

मरुतामिति। मरुतां पतिः स्वित् देवेन्द्रः वा, अहिमांशुः

तप्तुमसुकरमुपक्रमते
न जनोऽयमित्यवययौ स तापसैः ॥ १५ ॥
न ददाह भूरुहवनानि
हरितनयधाम दूरगम् ।
न स्म नयति परिशोषमपः
सुसहं बभूव न च सिद्धतापसैः ॥ १६ ॥
विनयं गुणा इव विवेकम्
अपनयभिदं नया इव ।

उत सूर्यः वा, पृथुशिखः महाज्वालः शिखी पावकः वा, असुकरं दुष्करं तपः तप्तुम् उपक्रमते ? अयं पुरुषः जनः कश्चित् प्राकृतः न इति सः अर्जुनः तापसैः तपस्विभिः । "अण् च" इति मत्वर्थीयः अण्प्रत्ययः । अवययौ अवगतः । यातेः अव-पूर्वात् कर्मणि लिट् । अत्र इन्द्रत्वादिकं धर्मम् आरोप्य जन-त्वापवादात् साम्यम् आरोप्य अपह्नवालङ्कारः । सामान्यलक्षणं तु—"निषिद्धविषये साम्यारोपो ह्यपह्नवः" इति लक्षणात् ॥ १५ ॥

न ददाहेति । दूरगं व्यापकम् इत्यर्थः । हरितनयस्य इन्द्र-सुतस्य अर्जुनस्य धाम तेजः भूरुहवनानि न ददाह अग्निवत् इति भावः । तथा अपः परिशोषं न नयति स्म अर्कवत् इति भावः । तथापि इति शेषः । सिद्धाश्च तापसाश्च तैः सुसहं न बभूव । अतः अस्य अलौकिकं तेजः इति भावः । अत एव दुःसहत्वदाहाद्यजनकत्वयोः विरोधात् विरोधाभासः अलङ्कारः । "आभासत्वे विरोधस्य विरोधालङ्कृतिर्मता" इति लक्षणात् ॥ १६ ॥

विनयमिति । अथ अनन्तरम् अशरणाः महर्षयः मुनयः विनयं शिक्षां गुणाः औदार्यादयः इव अशिक्षितस्य तदभावात्

न्यायमवधय इवाशरणाः
शरणं ययुः शिवमथो महर्षयः ॥ १७ ॥
परिवीतमंशुभिरुदस्त-
दिनकरमयूखमण्डलैः।
शम्भुमुपहतदृशः सहसा
न च ते निचायितुमभिप्रसेहिरे ॥ १८ ॥
अथ भूतभव्यभवदीशम्
अभिमुखयितुं कृतस्तवाः।

इति भावः। अपनयमिदं दुर्नीतिवारकं विवेकं सदसत् ज्ञान नयाः नीतयः इव। अविवेकिनः नीत्यभावात् इति भावः। नीतिः षाड्गुण्यप्रयोगः। नीयते अनेन इति न्यायः नियामकं प्रमाणं तम् अवधयः समयाः इव। अप्रामाणिकस्य समयोल्लङ्घितत्वात् इति भावः। शिवं त्रिनयनं शरणं रक्षितारम "शरणं गृहरक्षित्रोः" इत्यमरः। ययुः शरणत्वेन प्राप् इत्यर्थः। अशरणाः शरणम् इति च उपमासु अपि यथायोग्यं योज्यम्। उपमालङ्कारः ॥१७॥

परिवीतमिति। उदस्तं निरस्तं छादितं दिनकरमयूखमण्डलं यैः तैः सूर्य्यतेजोविजयिभिः इत्यर्थः। अंशुभिः तेजोभिः परिवीतं व्याप्तं शम्भुं शिवम् उपहतदृशः प्रतिहतदृष्टयः ते महर्षयः सहसा झटिति निचायितुं निशामयितुं द्रष्टुम् इत्यर्थः। "चायृपूजानिशामनयोः" इति धातोः "शकधृष" इत्यादिना तुमुन्। न अभिप्रसेहिरे न शेकुः ॥१८॥

अथेति। अथ दृगुपघातानन्तरं भूतभव्यभवतां भूत-

तत्र महसि ददृशुः पुरुषं
कमनीयविग्रहमयुग्मलोचनम् ॥ १९ ॥
ककुदे वृषस्य कृतबाहुम्
अकृशपरिणाहशालिनि ।
स्पर्शसुखमनुभवन्तमुमा-
कुचयुग्ममण्डल इवार्द्रचन्दने ॥ २० ॥
स्थितमुन्नते तुहिनशैल-
शिरसि भुवनातिवर्त्तिना ।
साद्रिजलधिजलवाहपथं
सदिगश्नुवानमिव विश्वमोजसा ॥ २१ ॥

…विग्रहवर्त्तमानानाम् ईशं देवम् अभिमुखयितुम् अभिमुखी-कर्त्तुं कृतस्तवाः कृतस्तोत्राः सन्तः न तु अन्यथा इति भावः । "स्तवः स्तोत्रं स्तुतिर्नुतिः" इत्यमरः । तत्र पूर्वोक्ते महसि तेजसि कमनीयविग्रहं रम्यमूर्त्तिम् अयुग्मानि त्रीणि लोच-नानि यस्य तं पुरुषं ददृशुः ॥१९॥

अथ पञ्चभिः पुरुषं विशिनष्टि । ककुद इत्यादिना । कीदृशं पुरुषम् । अकृशेन महता परिणाहेन विशालतया शालते इति तथोक्ते । "परिणाहो विशालता" इत्यमरः । वृषस्य वृषभस्य ककुदे अंसकूटे आश्रयीकृते इति शेषः । आर्द्रचन्दने उमायाः कुचयुग्ममण्डले इव कृतबाहुं न्यस्तहस्तम् अत एव स्पर्शसुखम् अनुभवन्तं ककुदस्य तथाविधस्पर्शसुखकरत्वात् इति भावः । उपमालङ्कारः ॥२०॥

स्थितमिति । उन्नते तुहिनशैलशिरसि हिमवतः शिखरे

न्यायमवधय इवाशरणाः
शरणं ययुः शिवमथो महर्षयः ॥ १७ ॥
परिवीतमंशुभिरुदस्त-
दिनकरमयूखमण्डलैः।
शम्भुमुपहतदृशः सहसा
न च ते निचायितुमभिप्रसेहिरे ॥ १८ ॥
अथ भूतभव्यभवदीशम्
अभिमुखयितुं कृतस्तवाः।

इति भावः। अपनयमिदं दुर्नीतिवारकं विवेकं सदमत् ज्ञान नयाः नीतयः इव। अविवेकिनः नीत्यभावात् इति भावः। नीतिः षाड्गुण्यप्रयोगः। नीयते अनेन इति न्यायः नियामकं प्रमाणं तम् अवधयः समयाः इव। अप्रामाणिकस्य समयोल्लङ्घितत्वात् इति भावः। शिवं त्रिनयनं शरणं रक्षितारम् "शरणं गृहरक्षित्रोः" इत्यमरः। ययुः शरणत्वेन प्रापुः इत्यर्थः। अशरणाः शरणम् इति च उपमासु अपि यथायोग्यं योज्यम्। उपमालङ्कारः ॥१७॥

परिवीतमिति। उदस्तं निरस्तं छादितं दिनकरमयूखमण्डलं यैः तैः सूर्य्यतेजोविजयिभिः इत्यर्थः। अंशुभिः तेजोभिः परिवीतं व्याप्तं शम्भुं शिवम् उपहतदृशः प्रतिहतदृष्टयः ते महर्षयः सहसा झटिति निचायितुं निशामयितुं द्रष्टुम् इत्यर्थः। "चायृपूजानिशामनयोः" इति धातोः "शकधृष" इत्यादिना तुमुन्। न अभिप्रसेहिरे न शेकुः ॥१८॥

अथेति। अथ दृगुपघातानन्तरं भूतभव्यभवतां भूत-

तत्र महसि ददृशुः पुरुषं
कमनीयविग्रहमयुग्मलोचनम् ॥ १९ ॥
ककुदे वृषस्य कृतबाहुम्
अकृशपरिणाहशालिनि।
स्पर्शसुखमनुभवन्तमुमा-
कुचयुग्ममण्डल इवार्द्रचन्दने ॥ २० ॥
स्थितमुन्नते तुहिनशैल-
शिरसि भुवनातिवर्त्तिना।
साद्रिजलधिजलवाहपथं
सदिगश्नुवानमिव विश्वमोजसा ॥ २१ ॥

…विप्रवर्त्तमानानाम् ईशं देवम् अभिमुखयितुम् अ.मन्त्रा णां कृतस्तवाः कृतस्तोत्राः सन्तः न तु अन्यथा इति भावः। “स्तवः स्तोत्रं स्तुतिर्नुतिः” इत्यमरः। तत्र पूर्वोक्ते महसि तेजसि कमनीयविग्रहं रम्यमूर्त्तिम् अयुग्मानि त्रीणि लोचनानि यस्य तं पुरुषं ददृशुः ॥१९॥

अथ पञ्चभिः पुरुषं विशिनष्टि। ककुद इत्यादिना। कीदृशं पुरुषम्। अकृशेन महता परिणाहेन विशालतया शालते इति तथोक्ते। “परिणाहो विशालता” इत्यमरः। वृषस्य वृषभस्य ककुदे अंसकूटे आश्रयीकृत इति शेषः। आर्द्रचन्दने उमायाः कुचयुग्ममण्डले इव कृतबाहुं न्यस्तहस्तम् अत एव स्पर्शसुखम् अनुभवन्तं ककुदस्य तथाविधस्पर्शसुखकरत्वात् इति भावः। उपमालङ्कारः ॥२०॥

स्थितमिति। उन्नते तुहिनशैलशिरसि हिमवतः शिखरे

अनुजानुमध्यमवसक्त-
वितरवपुषा महाहिना।
लोकमखिलमिव भूमिभृता
रवितेजसामवधिनाधिवेष्टितम्॥ २२॥
परिणाहिना तुहिनराशि-
विशदमुपवीतसूत्रताम्।
नीतमुरगमनुरञ्जयता
शितिना गलेन विलसन्मरीचिना॥ २३॥

स्थितं क्वचित् कोणे स्थितम् इत्यर्थः। तथापि भुवनातिवर्त्तिना सर्वलोकातिशायिना ओजसा तेजसा अद्रिभिः पर्वतैः जलधिभिः समुद्रैः जलवाहपथेन आकाशेन च सह वर्त्तते इति तथोक्तम्। दिग्भिः सह वर्त्तते इति सदिक्। उभयत्र अपि "तेन सहेति तुल्ययोगे" इति बहुव्रीहिः। विश्वम् अश्नुवानं व्याप्नुवन्तम् इव स्थितम् इति उत्प्रेक्षा। "अशूङ् व्याप्तौ" इति धातोः शानच्॥२१॥

अनुजान्विति। जानुनोः मध्ये अनुजानुमध्यम्। विभक्त्यर्थे अव्ययीभावः। अवसक्तं लग्नं विततम् आयतं च वपुः यस्य तेन महाहिना अवसक्तिकाबन्धभूतेन इत्यर्थः। अधिवेष्टितम् अत एव रवितेजसाम् अवधिना पर्य्यन्तभूतेन भूमिभृता लोकालोकाचलेन अधिवेष्टितम् अखिलम् लोकम् इव स्थितम् इति उपमा। "असूर्य्यम्पश्यापरभागो लोकालोकाचलः" इति आगमः॥२२॥

परिणाहिनेति। पुनः च तुहिनराशिवत् विशदं शुभ्रम् उपवीतसूत्रतां यज्ञोपवीतत्वं नीतं प्रापितम् उरगं शेषाहिम्

प्लुतमालतीसितकपाल-
कुमुदमुपरुद्धमूर्द्धजम्।
शेषमिव सुरसरित्पयसां
शिरसा विसारि शशिधाम बिभ्रतम् ॥२४॥

कुलकम्।

मुनयस्ततोऽभिमुखमेत्य
नयनविनिमेषनोदिताः।

अनुरञ्जयता स्वगुणोपरक्तं कुर्वता श्यामीकुर्वता इत्यर्थः। परिणाहिना विशालेन विलसन्मरीचिना प्रसृतकिरणेन शितिना नीलेन गलेन कण्ठेन उपलक्षितम्। "कण्ठो गलोऽथ ग्रीवायाम्" इत्यमरः। अत्र उरगस्य स्वधवलिमत्यागेन अन्यनीलिमग्रहणात् तद्गुणालङ्कारः। "तद्गुणः स्वगुणत्यागादन्योत्कृष्टगुणग्रहात्" इति लक्षणात् ॥२३॥

प्लुतेति। पुनः च मालती जातीकुसुमम्।"सुमना मालती जातिः"इति। "पुष्पे जातीप्रभृतयः स्वलिङ्गाः व्रीहयः फले" इति च अमरः। तद्वत् सितं यत् कपालम् एव कुमुदं तत् प्लुतम् आप्लुतं येन तत् तथोक्तम्। अवरुद्धमूर्द्धजं व्याप्तशिरोरुहम्। अत एव सुरसरित्पयसां शेषम् इव निर्य्यातावशिष्टं गाङ्गम् अम्भः इव स्थितम् इत्यर्थः। उत्प्रेक्षालङ्कारः। विसारि विसृत्वरं शशिधाम शिरसा बिभ्रतं पुरुषं ददृशुः इति पूर्व्वेण अन्वयः ॥२४॥

मुनय इति। ततः दर्शनानन्तरं मुनयः अभिमुखम् एत्य शिवस्य इति शेषः। नयनविनिमेषेण नेत्रसंज्ञया नोदिताः

पाण्डुतनयतपसा जनितं
जगतामशर्म भृशमाचचक्षिरे ॥२५॥

तरसैव कोऽपि भुवनैक-
पुरुष ! पुरुषस्तपस्यति।
ज्योतिरमलवपुषोऽपि रवेः
अभिभूय वृत्र इव भीमविग्रहः ॥२६॥

स धनुर्महेषुधि बिभर्त्ति
कवचमसिमुत्तमं जटाः।
वल्कमजिनमिति चित्रमिदं

[illegible]ति। सन्तः पाण्डुतनयस्य अर्जुनस्य तपसा जनितं तत् पूर्वोक्तं जगताम् अशर्म असुखं दुःखम् इत्यर्थः। "शर्मशात सुखानि च" इत्यमरः। भृशं सम्यक् आचचक्षिरे ॥२५॥

तरसेति। हे भुवनैकपुरुष ! पुरुषोत्तम ! वृत्रः वृत्रासुर इव भीमविग्रहः कः अपि अविज्ञातः इत्यर्थः। पुरुषः तरसा बलात्कारेण एव। "तरसा बलरंहसी" इति विश्वः। अमलं वपुषः उज्ज्वलमूर्त्तेः रवेः अपि ज्योतिः अभिभूय तपस्यति तपः चरति। "कर्मणो रोमन्थतपोभ्यां वर्त्तिचरोः" इति क्यङ् ॥२६॥

स इति। किञ्च स पुरुषः महान्तौ इषुधी यस्य तत् महेषुधि धनुः कवचं वर्म उत्तमम् असिं खड्गं जटाः वल्कं चीरम् अजिनं चर्म बिभर्त्ति। इत्येवं रूपम् इदं विरुद्धवेशधारणं मुनिताविरोधि मुनित्वप्रतिबन्धकं तथापि अस्य न राजते इति न किन्तु राजते एव इत्यर्थः। चित्रम् आश्चर्यम्। "सम्भाव्यनिषेधनिवर्त्तने द्वौ प्रतिषेधौ" इति वामनः ॥२७॥

मुनिताविरोधि न च नास्य राजते ॥२७॥

चलनेऽवनिश्चलति तस्य
करणनियमे सदिङ्मुखम्।
स्तम्भमनुभवति शान्तमरुद्-
ग्रहतारकागणयुतं नभस्तलम् ॥२८॥

स तदोजसा विजितसारम्
अमरदितिजोपसंहितम्।
विश्वमिदमपिदधाति पुरा
किमिवास्ति यन्न सुकरं खलु तेन ॥२९॥

चलन इति। किञ्च तस्य पुंस: चलने अवनि: पृथिवी चलति तथा करणनियमे समाधिना इन्द्रियनिरोधे सति। "करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि" इत्यमर:। शान्तै: स्तिमितै: मरुतां वायूनां ग्रहाणां सूर्य्यादीनां तारकाणां नक्षत्रादीनां च गणै: युतं नभस्तलं सदिङ्मुखं दिक्सहितं स्तम्भं निश्चलताम् अनुभवति इत्यर्थ:। अत: विश्वातिशयिनी तस्य शक्ति: उपलभ्यते इति भाव: ॥२८॥

न च एतत् उपेक्ष्यम् इति आशयेन आह। स इति। स: पुमान् ओजसा विजितसारं निरस्तसत्त्वम्। अमरदितिजोपसंहितं सुरासुरसहितं तत् इदं विश्वं पुरा अपिदधाति अपिधास्यति इत्यर्थ:। शीघ्रम् इव हरिष्यति इति भाव:। "निकटागामिके पुरा" इत्यमर:। "यावत्पुरानिपातयोर्लट्" इति भविष्यदर्थे लट्। तथा यत् खलु तेन पुंसा न सुकरं कर्म्म तत्

विजिगीषते यदि जगन्ति
युगपदथ सञ्जिहीर्षति ।
प्राप्तुमभवमभिवाञ्छति वा
वयमस्य नो विषहितुं क्षमा रुचः ॥३०॥

किमुपेक्षसे ? कथय नाथ !
न तव विदितं न किञ्चन ।
त्रातुमलमभयदार्हसि नः
त्वयि मा स्म शासति भवत् पराभवः ॥३१॥

किम् इव अस्ति न किञ्चित् तेन दुष्करम् अस्ति इत्यर्थः । सामान्येन विशेषसमर्थनरूपः अर्थान्तरन्यासः ॥२९॥

न च एतत् अन्यफलं तपः इति आह । विजिगीषते इति । स पुरुषः जगन्ति भुवनानि युगपत् विजिगीषते यदि विजेतुम् इच्छति वा । "पूर्ववत्सनः" इति आत्मनेपदम् । अथ युगपत् सञ्जिहीर्षति । संहर्तुम् इच्छति वा । अभवम् अपवर्गं प्राप्तुम् अभिवाञ्छति वा । न विघ्नः इति शेषः। किन्तु वयम् अपि अस्य रुचः तेजांसि विषहितुं सोढ़ुम् । "तीषसहलुभरुषरिषः" इति विकल्पात् इडागमः । नो क्षमाः न शक्ताः । केचित् "रुचः कामितानि विषहितुमवधारयितुम्" इति व्याचक्षते तत्र सहेः अवधारणार्थत्वं विचार्य्यम् ॥३०॥

किमिति । हे नाथ ! किं किमर्थम् उपेक्षसे ? कथय त्वम् इति शेषः । तव न विदितं त्वया अज्ञायमानम् इत्यर्थः ।"क्तस्य च वर्त्तमाने" इति षष्ठी । न किञ्चन किमपि न । हे अभयद ! नः अस्मान् अलं त्रातुम् अर्हसि । त्वयि शासति सति पराभवः मा स्म भवत् माभूत् । "स्मोत्तरे लङ् च" इति लङ् ॥३१॥

इति गां विधाय विरतेषु
मुनिषु वचनं समाददे।
भिन्नजलधिजलनादगुरु
ध्वनयन् दिशां विवरमन्धकान्तकः ॥ ३२ ॥

वदरीतपोवननिवास-
निरतमवगात मान्यथा।
धातुरुदयनिधने जगतां
नरमंशमादिपुरुषस्य गां गतम् ॥ ३३ ॥

द्विषतः परासिसिषुरेषः
सकलभुवनाभितापिनः।

इतीति। इति इत्थं गां वाचं विधाय अभिधाय इत्यर्थः। सामान्यस्य विशेषपर्य्यवसानात्। मुनिषु विरतेषु तूष्णीं भूतेषु सत्सु अन्धकान्तकः शिवः भिन्नस्य उद्वेलस्य जलधेः जलस्य नादम् इव गुरु गम्भीरं यथा तथा दिशां विवरम् अन्तरालं ध्वनयन् वचनं समाददे स्वीचकार उवाच इत्यर्थः ॥३२॥

वदरीति। वदरीतपोवने वदरिकाश्रमे निवासनिरतं नित्यनिवासिनं गां गतं भुवम् अवतीर्णं जगताम् उदयनिधने सृष्टिसंहारौ धातुः तयोः कर्त्तुः इत्यर्थः। "तृन्" इति दधातेः तृन्प्रत्ययः। अत एव "न लोक"इत्यादिना कर्मणि षष्ठीप्रतिषेधः। आदिपुरुषस्य विष्णोः अंशम् अंशभूतं नरं नरसंज्ञकम् इत्यर्थः। यः नारायणसंज्ञकः इति भावः। अन्यथा उक्तवैपरीत्येन मा अवगात मनुष्यमात्रं मा जानीत इत्यर्थः। "इणो गा लुङि" इति गादेशः ॥३३॥

क्रान्तकुलिशकरवीर्य्यबलान्
मदुपासनं विहितवान् महत्तपः॥ ३४ ॥

अयमच्युतश्च वचनेन
सरसिरुहजन्मनः प्रजाः।
पातुमसुरनिधनेन विभू
भुवमभ्युपेत्य मनुजेषु तिष्ठतः॥ ३५ ॥

सुरकृत्यमेतदवगम्य
निपुणमिति मूकदानवः।
हन्तुमभिपतति पाण्डुसुतं
त्वरया तदत्र सह गम्यतां मया॥ ३६ ॥

अथ तपसः निमित्तम् आह। द्विषत इति। एषः नरः सकलभुवनानि अभितापयन्ति अभीक्ष्णम् इति तथोक्तान्। "बहुलमाभीक्ष्ण्ये" इति णिनिः। क्रान्ते आक्रान्ते कुलिशकरस्य इन्द्रस्य वीर्य्यबले शक्तिसैन्ये यैः तान् द्विषतः शत्रून् परासिसिषुः परासितुम् इच्छुः। अस्यतेः सन्नन्तात् उप्रत्ययः। मदुपासनं मदाराधनम्। करणे ल्युट्। महत्तपः विहितवान्। अत्र निमित्तं शत्रुच्चयः एव इति॥३४॥

अथ अस्य मानुषावतारे कारणम् आह। अयमिति। विभू प्रभू अयं नरः अच्युतः कृष्णश्च सरसिरुहजन्मनः ब्रह्मणः वचनेन प्रार्थनया असुराणां निधनेन मारणेन करणेन प्रजाः पातुं रक्षितुं भुवम् अभ्युपेत्य मनुजेषु तिष्ठतः। वस्तुतस्तु साक्षात् नरनारायणौ एतौ कृष्णार्जुनौ इत्यर्थः॥३५॥

अथ अस्य सत्त्वसम्पदं प्रकाशयितुम् आह। सुरेति। मूक-

विवरेऽपि नैनमनिगूढम्
अभिभवितुमेष पारयन् ।
पापनिरतिरविशङ्कितया
विजयं व्यवस्यति वराहमायया ॥ ३७ ॥
निहते विडम्बितकिरात-
नृपतिवपुषा रिपौ मया ।
मुक्तनिशितविशिखः प्रसभं
मृगयाविवादमयमाचरिष्यति ॥ ३८ ॥

दानवः मूकाख्यः कश्चित् असुरः एतत्पाण्डवकृत्यं सुरकृत्यम् इति निपुणम् अवगम्य साधु निश्चित्य पाण्डुसुतम् अर्जुनं हन्तुम् अभिपतति । तत् तस्मात् कारणात् अत्र अर्जुनाश्रमे विषये आश्रमं प्रति इत्यर्थः । मया सह त्वरया गम्यतां द्रष्टुम् इति शेषः ॥३६॥

विवर इति । पापे निरतिः यस्य सः एषः दानवः विवरे रन्ध्रे अपि एकान्ते अपि इत्यर्थः । एनं पाण्डवम् अनिगूढं प्रकाशं स्पष्टं यथा तथा अभिभवितुं न पारयन् न शक्नुवन् । विभाषायां "नञ्" इति नञ्समासः । अविशङ्कितया स्वरूप-गूहनात् निःशङ्कितया वराहमायया वराहभूमिकया विजयं व्यवस्यति । विजयं प्रति उद्युक्तः इत्यर्थः ॥३७॥

ततः किं भविष्यति ? इत्यत्र आह । निहत इति । विडम्बितम् अनुकृतं किरातनृपतिवपुः येन तेन तद्रूपधारिणा इत्यर्थः; मया निहते रिपौ वराहे मुक्तनिशितविशिखः सन् अयं पाण्डवः प्रसभं प्रसह्य मृगयाविवादं मृगयाप्रहारकलहम् आचरिष्यति

तपसा निपीड़ितकृशस्य
विरहितसहायसम्पदः।
सत्त्वविहितमतुलं भुजयोः
बलमस्य पश्यत मृधेऽधिकुप्यतः॥ ३६ ॥

इति तानुदारमनुनीय
विषमहरिचन्दनालिना।
घर्मजनितपुलकेन लसद्-
गजमौक्तिकावलियुतेन वक्षसा॥ ४० ॥

करिष्यति। मत्प्रहृतम् एव मृगं प्रहृत्य स्वयम् अहम् एव प्रहर्त्ता इति कल्पयिष्यते इत्यर्थः॥३८॥

ततः अपि किं भावि? इत्यत आह। तपसेति। तपसा नितरां पीड़ितः अत एव कृशः तस्य तपसा निपीड़ितकृशस्य। "पूर्वकाल"इत्यादिना समासः। तथा विरहिता सहायसम्पत् यस्य तस्य एकाकिनः मृधे रणे। "मृधमास्कन्दनं संख्यम्" इत्यमरः। अधिकुप्यतः अधिकं कुप्यतः अस्य पाण्डवस्य सत्त्व-विहितं स्वभावकृतं स्वाभाविकम् इत्यर्थः। "सत्त्वोऽस्त्री जन्तुषु क्लीवे व्यवसाये पराक्रमे। आत्मभावे पिशाचादौ द्रव्ये सत्ता-स्वभावयोः। प्राणे बलेऽन्तःकरणे" इति वैजयन्ती। अतुलं निरुपमं भुजयोः बाह्वोः बलं शक्तिं पश्यत। "बलं शक्तिर्बलं सैन्यम्" इति शाश्वतः॥३६॥

अथ त्रिभिः अस्य किरातभावं वर्णयति। इतीत्यादि। शिवः इति इत्थं तान् मुनीन् उदारं युक्तियुक्तं यथा तथा अनु-नीय शिक्षयित्वा उक्त्वा इति यावत्। रुचिरः किरातपृतना-

वदनेन पुष्पितलतान्त-
नियमितविलम्बिमौलिना।
बिभ्रदरुणनयनेन रुचं
शिखिपिच्छलाञ्छितकपोलभित्तिना ॥४१॥
बृहदुद्वहन् जलदनादि
धनुरुपहितैकमार्गणम्।

धृतिः संवव्रे इति उत्तरेण अन्वयः। किरातसेनापतिवेषधारी बभूव इत्यर्थः। कथम्भूतः? विषमा विकृतविन्यासा हरिचन्दनस्य आलयः रेखाः यस्मिन् तेन घर्मेण स्वेदेन जनिताः पुलकाः रोमाञ्चाः यस्मिन् तेन। "पुलकः पुनः। रोमाञ्चः कण्टको रोमविकारो रोमहर्षणम्" इति हेमचन्द्रः। "घर्मः स्यादातपे ग्रीष्मे उष्णस्वेदाम्बसोरपि" इति विश्वः। लसन्तः शोभमानाः गजमौक्तिकानां करिकुम्भोद्भवमौक्तिकानाम् आवलयः एव गुणाः सूत्राणि यस्मिन् तेन वक्षसा वक्षःस्थलेन उपलक्षितः। करिणां मुक्तायोनित्वे प्रमाणम् आह अगस्त्यः—"जीमूतकरिमत्स्याहिवंशशङ्खवराहजाः। शुक्त्युद्भवाश्च विज्ञेया अष्टौ मौक्तिकयोनयः॥" इति ॥४०॥

वदनेनेति। पुष्पितैः लतान्तैः विकसितलताग्रैः नियमिताः संयताः विलम्बिनश्च ते मौलयः केशाः यस्य तेन। "चूडा किरीटं केशाश्च संयता मौलयस्त्रयः" इत्यमरः। शिखिपिच्छलाञ्छिते बर्हिबर्हाङ्किते कपोलभित्ती यस्य तेन अरुणनयनेन आरक्तनेत्रेण वदनेन रुचं शोभां बिभ्रत् ॥४१॥

बृहदिति। पुनश्च जलदः इव नदति इति जलदनादि। "कर्त्तर्य्युपमाने" इति णिनिः। उपहितैकमार्गणं संहितैकबाणं

मेघनिचय इव संवव्रते
रुचिरः किरातपृतनापतिः शिवः ॥ ४२ ॥

विशेषकम् ।

अनुकूलमस्य च विचिन्त्य
गणपतिभिरात्तविग्रहैः ।
शूलपरशुशरचापभृतैः
महती वनेचरचमूर्विनिर्ममे ॥ ४२ ॥

विरचय्य काननविभागम्
अनुगिरमथेश्वराज्ञया ।

धनुः उद्वहन् । अत एव मेघनिचयः इव स्थितः इति उपमा । अत्र विशेषके स्वभावोक्तिः अलङ्कारः । "स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम्" इति लक्षणात् ॥४२॥

अनुकूलमिति । अस्य शिवस्य अनुकूलं विचिन्त्य प्रियम् इति निश्चित्य आत्तविग्रहैः गृहीतकिरातदेहैः । तथा शूलानि परशवः कुठाराः शराः चापानि च तानि भृतानि यैः तैः । "प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ" इति निष्ठायाः परनिपातः । गणपतिभिः प्रमथमुख्यैः महती वनेचरचमूः सेना विनिर्ममे निर्मिता । "माङ् माने" कर्मणि लिट् । "ऋस्व" इति अभ्यासस्य ऋस्वत्वम् ॥४३॥

विरचय्येति । अथ ईश्वराज्ञया अनुगिरं गिरौ । विभक्त्यर्थे अव्ययीभावः । "गिरेश्च सेनकस्य" इति समासान्तः । काननविभागं विरचय्य अस्य अयम् इति देशविभागं कृत्वा इत्यर्थः ।

भीमनिनदपिहितोरुभुवः
परितोऽपदिश्य मृगयां प्रतस्थिरे ॥ ४४ ॥

क्षुभिताभिनिःसृतविभिन्न-
शकुनिमृगयूथनिःस्वनैः ।
पूर्णपृथुवनगुहाविवरः
सहसा भयादिव ररास भूधरः ॥ ४५ ॥

न विरोधिनी रुषमियाय
पथि मृगविहङ्गसंहतिः ।
घ्नन्ति सहजमपि भूरिभियः
सममागताः सपदि वैरमापदः ॥ ४६ ॥

भीमैः कलकलैः पिहिताः उरवः भुवः यैः ते तथोक्ताः सन्तः मृगयाम् अपदिश्य व्याजीकृत्य परितः प्रतस्थिरे प्रस्थिताः ॥४४॥

क्षुभितेति । क्षुभिताः त्रस्ताः अभिनिःसृता स्वस्थानात् निर्गताः विभिन्नाः मुक्तसङ्गाश्च ये शकुनयः पक्षिणः मृगाश्च तेषां यूथानि तानि तेषां निःस्वनैः पूर्णानि पृथूनि वनानि गुहाविवराणि च यस्य सः भूधरः सहसा भयात् इव इति उत्प्रेक्षा । ररास चुक्रोश । "रस आक्रोशे" लिट् ॥४५॥

नेति । पथि पलायनमार्गे विरोधिनी जातिवैरिणां मृगाणां सिंहव्याघ्रादीनां विहङ्गानां काकोलूकानां च संहतिः सङ्घः रुषं परस्परक्रोधं न इयाय न प्राप, किन्तु सहैव चचार इत्यर्थः। तथाहि । भूरि प्रभूता भीः यासु ताः समं साधारण्येन आगताः आपदः विपत्तयः सहजम् अपि वैरं सपदि घ्नन्ति । न हि सङ्घातव्यसनेषु प्रजायते वैरानुबन्धः इति भावः ॥४६॥

चमरीगणैः शिवबलस्य
बलवति भयेऽप्युपस्थिते ।
वंशविततिषु विषक्तपृथु-
प्रियबालधिभिराददे धृतिः ॥ ४७ ॥
हरसैनिकाः प्रतिभयेऽपि
गजमदसुगन्धिकेसरैः ।
स्वस्थमभिददृशिरे सहसा
प्रतिबोधजृम्भितमुखैर्मृगाधिपैः ॥ ४८ ॥

चमरीति । वंशविततिषु वेणुगुल्मेषु विषक्ताः लग्नाः पृथवः भृशं प्रियबालाः प्रियरोमाणः बालधयः पुच्छानि येषां तैः । "पुच्छोऽस्त्री लूमलाङ्गूले बालहस्तश्च बालधि" इत्यमरः । चमरीगणैः मृगविशेषैः शिवबलस्य सम्बन्धिनि तद्धेतुके इत्यर्थः । सम्बन्धमात्रविवक्षायां षष्ठी । अन्यथा "भीत्रार्थानां भयहेतुः" इति पञ्चमी स्यात् । बलवति प्रबले भये उपस्थिते प्राप्ते अपि धृतिः आददे स्वीकृता । बालच्छेदभयात् मानहानिम् अपि अवगणय्य स्थितम् इत्यर्थः ॥४७॥

हरेति । प्रतिभये भयहेतौ । "भयङ्करं प्रतिभयम्" इत्यमरः । प्राप्ते अपि इति शेषः । गजमदैः सुगन्धयः सुरभयः केसराः सटाः येषां तैः हतानेकगजैः इत्यर्थः । सहसा सेनाकलकलश्रवणानन्तरम् एव प्रतिबोधेन निद्रापगमेन जृम्भितानि व्यात्तानि मुखानि येषां तैः मृगाधिपैः सिंहैः स्वस्थं निःशङ्कम् एव हरसैनिकाः अभिददृशिरे ईक्षिताः । न तु किञ्चित् क्षुभि-

विभराम्बभूवुरपवृत्त-
जठरशफरीकुलाकुलाः।
पङ्कविषमिततटाः सरितः
करिरुग्णचन्दनरसारुणं पयः॥ ४९॥

महिषक्षतागुरुतमाल-
नलदसुरभिः सदागतिः।
व्यस्तशुकनिभशिलाकुसुमः
प्रणुदन् ववौ वनसदां परिश्रमम्॥ ५०॥

तम् इत्यर्थः। युक्तं च एतत् राजानामधारिणां केसरिणाम् इति भावः॥४८॥

बिभरामिति। अपवृत्तजठरैः तत्कालक्षुभितात् लुठितोदरैः शफरीकुलैः आकुलाः व्याप्ताः पङ्कैः विषमितानि दुर्गमीकृतानि तटानि कूलानि यासां ताः सरितः करिभिः पलायमानैः इति शेषः। रुग्णानां मार्गरोधितया भग्नानाम्। "ओदितश्च" इति निष्ठानत्वम्। चन्दनानां रसैः अरुणं पयः बिभराम्बभूवुः। भृधातोः "भीह्रीभृहुवां श्लुवच्च" इति आमप्रत्ययः। श्लुवद्भावश्च "कृञ्चानुप्रयुज्यते लिटि" इति भुवः अनुप्रयोगः॥४९॥

महिषेति। महिषैः क्षतानि विदलितानि तैः अगुरुभिः तमालैः नलदैः उशीरैः च सुरभिः व्यस्तानि विक्षिप्तानि शुकनिभानि शुकसवर्णानि शिलाकुसुमानि शैलेयाख्याः ओषधिविशेषाः येन सः। अतः शीतलः इति भावः। "कालानुसार्य्यवृद्धाश्मपुष्पशीतशिवानि तु। शैलेयम्" इत्यमरः। शुकनिभेति स्वरूपकथनम्। सदागतिः वायुः वनसदां वनेचराणां परिश्रम.

मथिताम्भसो रयविकीर्ण-
मृदितकदलीगवेधुकाः ।
क्लान्तजलरुहलताः सरसीः
विदधे निदाघ इव सत्त्वसंप्लवः ॥ ५१ ॥

इति चालयन्नचलसानु-
वनगहनजानुमापतिः ।
प्राप मुदितहरिणीदशन-
क्षतवीरुधं वसतिमैन्द्रसूनवीम् ॥ ५२ ॥

प्रणुदन् अतः मन्दः इति भावः । "मातरिश्वा सदागति" इत्यमरः । ववौ वाति स्म ॥५०॥

मथिताम्भस इति । सत्त्वसप्लवः प्राणिसंक्षोभः निदाघः ग्रीष्मः इव सरसीः सरांसि । "कासारः सरसी सरः" इत्यमरः । मथिताम्भसः संक्षोभितोदकाः रयेण पलायनवेगेन विकीर्ण व्याकीर्णं यथा तथा मृदिताः निष्पीड़िताः कदल्यः गवेधुकाः तृणधान्यविशेषाश्च यासां ताः तथोक्ताः।"तृणधान्यानि नीवाराः स्त्री गवेधुर्गवेधुका" इत्यमरः । मृदित इति । "क्ङिति च" इति गुणप्रतिषेधः । क्लान्ताः जलरुहलताः पद्मिन्यः यासु ताः एवम्भूताः विदधे चकार ॥५१॥

इतीति । इति इत्थम् उमापतिः अचलसानुषु वनेषु उपभोग्यवृक्षेषु गहनेषु दावेषु च जातान् तथोक्तान् सत्त्वान् इति शेषः । चालयन् । मुदितानां हरिणीनां दशनैः क्षताः वीरुधः लताः यस्यां ताम् इन्द्रसूनोः इमाम् ऐन्द्रसूनवीं वसति अत्र इति वसतिम् आश्रमम् । "वहिवस्यर्त्तिभ्यश्च" इति औणादिकः वसतेः अतिप्रत्ययः । प्राप ॥५२॥

स तमाससाद घननीलम्
अभिमुखमुपस्थितं मुनेः ।
पोत्रनिकषणविभिन्नभुवं
दनुजं दधानमथ सौकरं वपुः ॥ ५३ ॥

कच्छान्ते सुरसरितो निधाय सेनाम्
अन्वीतः स कतिपयैः किरातवर्य्यैः ।
प्रच्छन्नस्तरुगहनैः सगुल्मजालैः
लक्ष्मीवाननुपदमस्य सम्प्रतस्थे ॥ ५४ ॥

इति ईश्वराभिगमनो नाम द्वादशः सर्गः ॥१२॥

स इति । अथ अनन्तरं सः शिवः घननीलं मेघमेचकं मुनेः अर्जुनस्य अभिमुखम् उपस्थितम् आगतम् । पोत्रस्य मुखाग्रस्य । "मुखाग्रे क्रोड़हलयोः पोत्रम्" इत्यमरः । "हलसूकरयोः पुवः" इति ष्ट्रन्प्रत्ययः । निकषणेन उल्लेखनेन विभिन्ना विदारिता भूः येन तम् । सूकरस्य इदं सौकरं वाराहं वपुः दधानं दनुजम् आससाद प्राप ददर्श इति यावत् ॥५३॥

कच्छान्त इति । लक्ष्मीवान् "मादुपधायाश्च मतोर्वोऽयवादिभ्यः" इति मतुपः मकारस्य वकारादेशः । सः शिवः । सुरसरितः कच्छान्ते अनूपप्रान्ते । "जलप्रायमनूपं स्यात् पुंसि कच्छस्तथाविधः" इत्यमरः । सेनां निधाय स्थापयित्वा इत्यर्थः । कतिपयैः किरातवर्य्यैः अन्वीतः अनुगतः सन् । "ई गतौ" इति धातोः अनुपूर्वात् कर्मणि क्तः । सगुल्मजालैः लताप्रतानसहितैः तरुगहनैः प्रच्छन्नः छादितः । "वा दान्तशान्त" इत्यादिना निपातः । अस्य वराहस्य पदम् अनु अनुपदं पदानुसारेण

## त्रयोदशः सर्गः ।

—※—

वपुषा परमेण भूधराणाम्
अथ सम्भाव्यपराक्रमं विभेदे ।
मृगमाशु विलोकयाञ्चकार
स्थिरदंष्ट्रोग्रमुखं महेन्द्रसूनुः ॥ १ ॥

स्फुटबद्धसटोन्नतिः स दूरात्
अभिधावन्नवधीरितान्यकृत्यः ।
जयमिच्छति तस्य जातशङ्के
मनसीमं मुहुराददे वितर्कम् ॥ २ ॥

इत्यर्थः । "सम्प्रतस्थे प्रस्थितः । "समवप्रविभ्यः स्थः" इति आत्मनेपदम् । प्रहर्षिणीवृत्तम् ॥५४॥

इति किरातार्जुनीये द्वादशसर्गव्याख्या समाप्ता ।

---

वपुषेति । अथ ईश्वरप्रस्थानानन्तरं महेन्द्रसूनुः अर्जुनः परमेण महता वपुषा हेतुना भूधराणां विभेदे विदारणे सम्भाव्यपराक्रमं क्षमः अयम् इति प्रतर्क्यपौरुषम् । स्थिराभ्यां दृढाभ्यां दंष्ट्राभ्याम् उग्रं मुखं यस्य तं मृगं वराहम् । आशु तदागमनानन्तरम् अविलम्बेन इत्यर्थः। विलोकयाञ्चकार ददर्श । अस्मिन् सर्गे प्राक् पञ्चविंशत्श्लोकादौपच्छन्दसिकं वृत्तम् ॥१॥

स्फुटेति । स्फुटा स्पष्टा बद्धा विरचिता सटानां केसराणाम् उन्नतिः उद्गतिः यस्य सः क्रोधात् हर्षितलोमा इत्यर्थः । "सटा-जटाकेसरयोः" इत्यमरः । दूरात् अभिधावन् । तथा अवधीरि-

घनपोत्रविदीर्णशालमूल:
निविडस्कन्धनिकाषरुग्णवप्र: ।
अयमेकचरोऽभिवर्त्तते मां
समरायेव समाजुहूषमाण: ॥ ३ ॥
इह वीतभया तपोऽनुभावात्
जहति व्यालमृगा: परेषु वृत्तिम् ।

तान्यकृत्य: अनन्यकर्मा स: वराह: जयम् इच्छति जयार्थिनि अत एव जातशङ्के स्वयं जिघांसो: द्विषाम् एकलक्ष्यत्वात् इति भाव:। तस्य मुने: मनसि मुहु: इमं वितर्कं वक्ष्यमाणम् ऊहम् । "अध्याहारस्तर्क ऊह:" इत्यमर: । आददे उत्पादयामास ॥२॥

अथ एकादशभि: वितर्कम् एव निरूपयति । घनपोत्रेति । घनेन कठिनेन पोत्रेण मुखाग्रेण विदीर्णानि विदलितानि शालमूलानि वृक्षबध्ना.येन स: ।"मूलं बध्नोऽङ्घ्रिनामक:" इत्यमर: । निविड़स्य स्कन्धस्य निकाषेण निकषणेन रुग्णवप्र: भग्नसानु: अत: महासत्त्वसम्पन्न: इति भाव:। एकश्च असौ चरश्च इति एकचर: एकाकी यूथात् अपेत इत्यर्थ:। अत: अयं वराह: समराय समरं कर्त्तुम् । "क्रियार्थोपपदस्य च कर्मणि स्थानिन:" इति चतुर्थी । समाजुहूषमाण: इव समाह्वातुम् इच्छन् इव इवशब्द: सम्भावनायाम् । समाह्वयते: सन्नन्तात् शानच्प्रत्यय: । "स्पर्द्धायामाङ:" "पूर्ववत् सन" इति आत्मनेपदम् । "अभ्यस्तस्य च" इति सम्प्रसारणम् । माम् अभिवर्त्तते अभिधावति । उपसर्गवशात् सकर्मकत्वम् । अत: सर्वथा न अयम् उपेक्ष्य' इति भाव: ॥३॥

इहेति । इह आश्रमे तपोऽनुभावात् वीतभया: लक्षणया

मयि तां सुतरामयं विधत्ते
विकृतिः किं नु भवेदियं नु माया ? ॥४॥
अथवैष कृतज्ञवेव पूर्वं
भृशमासेवितया रुषा न मुक्तः ? ।
अवधूय विरोधिनीः किमारात्
मृगजातीरभियाति मां जवेन ? ॥ ५ ॥
न मृगः खलु कोऽप्ययं जिघांसुः

विगतवैराः इत्यर्थः अत एव व्यालमृगाःक्रूरव्याघ्रादयः ।"व्यालो भुजङ्गमे क्रूरे श्वापदे दुष्टदन्तिनि" इति विश्वः । परेषु प्राण्यन्तरेषु वृत्तिं जीविकां जहति हिंसया न जीवन्ति इत्यर्थः। अयं वराहः मयि मद्विषये तां वृत्तिं सुतरां विधत्ते जिघांसति इत्यर्थः । तत् इयं विकृतिः तपःसामर्थ्यभङ्गरूपा भवेत् किं नु ? यद्वा माया कस्यचित् दैत्यस्य वराहभूमिका भवेत् नु ? किं नु शब्दौ वितर्के ॥४॥

अथवेति । अथवा इति पक्षान्तरे । एषः मृगः पूर्वं जन्मान्तरेण भृशम् अत्यर्थम् आसेवितया अतिपरिचितया रुषा क्रुधा मद्गोचरया इति शेषः। कृतज्ञया इव पूर्वकृतं वैरानुबन्धं सम्प्रति जानाति इति उत्प्रेक्षा । न मुक्तः न त्यक्तः अद्यापि इति शेषः। नूनम् अयं प्राग्भवीयवैरानुबन्धी कश्चित् सम्प्रति वैरवीजासम्भवात् इति भावः । कुतः ? यत् यतः आरात् समीपतः। "आराद्दूरसमीपयोः" इत्यमरः । विरोधिनीः मृगजातीः अवधूय त्यक्त्वा जवेन माम् अभियाति अभिधावति अन्यथा न अभियायात् इति भावः ॥५॥

स्खलति त्वत्र तथा भृशं मनो मे ।
विमलं कलुषीभवच्च चेतः
कथयत्येव हितैषिणं रिपुं वा ॥६॥
मुनिरस्मि निरागसः कुतो मे
भयमित्येष न भूतयेऽभिमानः ।
परवृद्धिषु बद्धमत्सराणां
किमिव ह्यस्ति दुरात्मनामलङ्घ्यम् ? ॥७॥

न केवलम् अभियानम् एव किन्तु मनोवृत्तिः अपि अत्र प्रमाणम् इति आह । न मृग इति । अयं मृगः न खलु किन्तु कः अपि कश्चित् अन्यः एव जिघांसुः हन्तुम् इच्छुः । हन्तेः सन्नन्तात् उप्रत्ययः । "अभ्यासाच्च" इति कुत्वम् । "अज्झनगमां सनि" इति दीर्घः । कुतः ? हि यस्मात् अत्र अस्मिन् मृगविषये मे मनः तथा भृशं स्खलति क्षुभ्यति यथा अयं जिघांसुः इति बुद्धिः उत्पद्यते इत्यर्थः । तथाहि । विमलं प्रसन्नं तथा कलुषीभवत् क्षुभ्यच्च चेतः एव हितैषिणं रिपुं वा मित्रम् अमित्रं च कथयति । यत्र यत्र मनः प्रसीदति तत् एव मित्रम् अन्यथा तु अन्यथा इति निश्चितम् इत्यर्थः । अतः अयं वध्यः इति भावः ॥६॥

ननु मुनेः किम् अनया दुःशङ्कया? तत्र आह । मुनिरिति । मुनिः अस्मि अतः निरागसः निरपराधस्य मे कुतःभयम्? इति एषः अभिमानः अहङ्कारः । "गर्वोऽभिमानोऽहङ्कारः" इत्यमरः। अनपकारिणं मां कः अपि किं करिष्यति इति बुद्धिः भूतये श्रेयसे न भवति । तथाहि परवृद्धिषु विषये बद्धमत्सराणां

दनुजः स्विदयं क्षपाचरो वा?
वनजे नेति बलं बतास्ति सत्त्वे।
अभिभूय तथाहि मेघनीलः
सकलं कम्पयतीव शैलराजम् ॥ ८ ॥

अयमेव मृगव्यसत्रकामः
प्रहरिष्यन्मयि मायया शमस्थे।
पृथुभिर्ध्वजिनीरवैरकार्षीत्
चकितोद्भ्रान्तमृगाणि काननानि ॥ ९ ॥

दुरात्मनाम् अलङ्घ्यं किम् इव अस्ति? न किञ्चित् अकार्य्यम् अस्ति इत्यर्थः। इवशब्दः वाक्यालङ्कारे ॥७॥

अस्तु जिघांसुः अपि क्षुद्रः किं करिष्यति? इत्यत्र आह। दनुज इति। अयं दनुजः स्वित् दानवः वा क्षपाचरः राक्षसः वा न तु मृगः इव इत्यर्थः। कुतः? वनजे सत्त्वे वन्यप्राणिनि इति ईदृशं बलं न अस्ति बत इति आश्चर्य्ये। बलम् एव समर्थयते। तथाहि। मेघनीलः अयं वराहः सकलं शैलराजम् अभिभूय आक्रम्य कम्पयति इव पदविष्टम्भभरात् तथा प्रतीयते इत्यर्थः। अत्र कम्पयति इव इति उत्प्रेक्षागर्भः अयं शैलकम्पनरूपकार्य्येण तत्कारणबलातिरेकसमर्थनात् कार्य्येण कारणसमर्थनरूपः अर्थान्तरन्यासः ॥८॥

किञ्च यः अयं शैले मृगयाकलकलः इव श्रूयते सः अपि एतन्मायापरिकल्पितः एव इति आह। अयमिति। अयम् एव शमस्थे शान्तनिविष्टे मयि। अधिकरणविवक्षायां सप्तमी। मायया प्रहरिष्यन् प्रहर्त्तुम् इच्छन् इत्यर्थः। "लृट् शेषे च" इति चकारात् क्रियार्थायां क्रियायां लृट्। "लृटः सद्वा" इति

बहुशः कृतसत्कृतेर्विधातुं
प्रियमिच्छन्नथवा सुयोधनस्य।
क्षुभितं वनगोचराभियोगात्
गणमाशिश्रियदाकुलं तिरश्चाम्? ॥ १० ॥

अवलीढसनाभिरश्वसेनः
प्रसभं खाण्डवजातवेदसा वा।

शब्दादेशः। मृगव्यं मृगया तस्य सत्रं वनं तदर्थं वनम् इत्यर्थः। तत्कामयते इति मृगव्यसत्रकामः मृगयाभूमिपरिग्रहार्थी सन् इत्यर्थः। "कर्मण्यण्"। "आच्छोदनं मृगव्यं स्यादाखेटो मृगया स्त्रियाम्" इति। "सत्रमाच्छादने यज्ञे सदा दाने वनेऽपि च" इति च अमरः। पृथुभिः दृश्यद्भिः ध्वजिनीरवैः सेनाकलकलैः स्वमायया कल्पितैः एव इत्यर्थः। काननानि चकितोद्भ्रान्ताः त्रस्तपलायिताः मृगाः येषु तानि अकार्षीत् चकार। अयं दम्भान्वेषी मत्प्रहारार्थं स्वयम् एव मृगयुः भूत्वा वनावरोधाय सेनाघोषं कल्पयामास। सः मृगरूपेण आगच्छति इत्यर्थः॥९॥

वितर्कान्तरम् आह। बहुश इति। अथवा बहुशः कृता सत्कृतिः सत्कारः येन तस्य सुयोधनस्य प्रियं मद्वधरूपं विधातुं कर्त्तुम् इच्छन् यः कश्चित् इति शेषः। वनं गोचरं स्थानं येषां तेषां वनगोचराणाम् अभियोगात् अवरोधात् क्षुभितम् उद्विग्नम् आकुलं तिरश्चां गणम् आशिश्रियत् वराहरूपेण प्राविशत्। "णिश्रिद्रुस्रुभ्यः कर्त्तरि चङ्"। "चङि" इति द्विर्भावः॥१०

वितर्कान्तरम् आह। अवलीढेति। खाण्डवजातवेदसा खाण्डववनाग्निना प्रसभम् अवलीढसनाभिः दग्धबन्धुः। "सपिण्डास्तु सनाभयः। सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः"

प्रतिकर्तुमुपागतः समन्युः
कृतवैरो यदि वा वृकोदरेण ? ॥ ११ ॥
बलशालितया यथा तथा वा
धियमुच्छेदपरामयं दधानः ।
नियमेन मया निवर्हणीयः
परमं लाभमरातिभङ्गमाहुः ॥ १२ ॥
कुरु तात ! तपांस्यमार्गदायी
विजयायेत्यलमन्वशान्मुनिर्माम्

इत्यमरः। अत एव समन्युः बद्धवैरः तस्य अर्जुनस्य अपकारयितृत्वात् इति भावः। अश्वसेनः तक्षकपुत्रः कश्चित् महासर्पः प्रतिकर्तुं वैरनिर्यातनार्थम् उपागतः वराहमायया इति शेषः। पक्षान्तरम् आह। यदि वा वृकोदरेण भीमसेनेन कृतमन्युः जनितक्रोधः वा कश्चित् इति शेषः। पुरा किल पाण्डवः खाण्डवदाहे पावकभयात् पलायमानान् तक्षकपुत्रान् अश्वसेनस्य बन्धून् बाणैः अवरुध्य दाहयामास इति भारतकथानुसन्धेया इति॥११॥

अथ द्वाभ्यामनन्तरकरणीयम् अध्यवस्यति। बलेत्यादिना। किं बहुना। यथा तथा वा अस्तु अयं मायिकः पारमार्थिको वा अस्तु इत्यर्थः। बलशालितया बलदृप्ततया इत्यर्थः। उच्छेदपरां धियं दधानो मां जिघांसुरित्यर्थः। अयं मृगो नियमेन अवश्यं मया निवर्हणीयो वध्यः। "प्रमापणं निवर्हणम्" इत्यमरः। तथाहि अरातिभङ्गं शत्रुवधं परमं लाभम् आहुः ॥१२॥

ननु तपोविरोधिनी हिंसेत्याशङ्क्याह। कुर्विति। हे तात ! वत्स ! मार्गदायी न भवतीति अमार्गदायी रन्ध्रान्वेषिणां प्रवे-

बलिनश्च वधादृतेऽस्य शक्यं
व्रतसंरक्षणमन्यथा न कर्त्तुम् ॥ १३ ॥

इति तेन विचिन्त्य चापनाम
प्रथमं पौरुषचिह्नमाललम्बे ।
उपलब्धगुण: परस्य भेदे
सचिव: शुद्ध इवाददे च बाण: ॥ १४ ॥

अनुभाववता गुरु स्थिरत्वात्
अविसंवादि धनुर्धनञ्जयेन ।

[illegible] अत्र [illegible] इत्यर्थ: । कुत: जयादित्वात् इत्याह । [illegible] तपोसि कुर्विति मुनि: [illegible] कम् अत्रं सूकरम् अन्तरात् [illegible] [illegible]ष्टवान् । अनुगासिलङ् । ननु मुनि: वा कथम् [illegible] अन्वगात्? तत्राह । बलिन इति । अस्य सूकरस्य बलिन: [illegible] वधादृते वधं विना । "अन्यारादितरर्त्ते" इत्यादिना [illegible] अन्यथा उपायान्तरेण व्रतसंरक्षणं तपोरक्षणं कर्तुं न शक्यं [illegible] हिंसापि दुष्टनिग्रहात्मिका न अधर्म इत्यर्थ: ॥१३॥

इतीति । तेन अर्जुनेन इतीत्थं विचिन्त्य वितर्क्य चापनाम चापाख्यं प्रथमं पौरुषचिह्नं [illegible] मुख्यायुधत्वात् इति भाव: [illegible] आललम्बे गृहीतम् । कर्मणि लिट् । अथ परस्य शत्रो: भेदे विदारणे उपलब्धगुणो ज्ञातशक्ति: बाणस्तु [illegible] [illegible] । शुद्धो ऋजु: दिग्धत्वादिदोषरहितो वा । "न कर्णिभिर्नो दिग्धैर्नाग्निज्वलिततेजसै:" इति निषेधात् । अन्यत्र [illegible] निर्मलचित्त इति यावत् । बाणश्च सचिव इव आददे । अत्र बाणसचिवयो: शब्दमात्रसाधर्म्यात् उपमालङ्कार: प्रकृताप्रकृत[illegible] इति सर्वस्वकार: उपमैवेति केचित् ॥१४॥

स्वबलव्यसनेऽपि पीड्यमानं
गुणवन्मित्रमिवानतिं प्रपेदे ॥ १५ ॥
प्रविकर्षनिनादभिन्नरन्ध्रः
पदविष्टम्भनिपीडितस्तदानीम् ।
अधिरोहति गाण्डिवं महेषौ
सकलः संशयमारुरोह शैलः ॥ १६ ॥
ददृशेऽथ सविस्मयं शिवेन

अनुभावेति । गुरु महत् पूज्यं च स्थिरत्वात् सारवत्त्वात् अविसंवादि अभङ्गुरम् अन्यच्च प्रतिष्ठितत्वात् असत्यरहितं गुणवत् सज्यम् अन्यत्र औदार्य्यादिगुणवत् धनुः मित्रमिव अनुभाववता निश्चयबुद्धिमता । "अनुभावः प्रभावे च सतां च मतिनिश्चयः" इत्यमरः । धनञ्जयेन स्वबलव्यसनेऽपि तपसा क्षीणबलेऽपि । अन्यत्र स्वं धनं तदेव बलं तस्य ह्रासेऽपि पीड्यमानम् आकृष्यमाणम् अवरुद्ध्यमानञ्च सन्मित्रम् इव आनतिं नम्रताम् आनुकूल्यञ्च प्रपेदे । अलङ्कारस्तु पूर्ववत् ॥१५॥

प्रविकर्षेति । तदानीं तस्मिन् काले महेषौ गाण्डिवम् अर्जुनधनुः अधिरोहति सति ।"कपिध्वजस्य गाण्डीवगाण्डिवौ पुंनपुंसकौ" इत्यमरः । "गाण्डाजगात् संज्ञायाम्" इति वप्रत्ययः । प्रविकर्षेण ज्याविकर्षेण यो निनादः तेन भिन्नरन्ध्रो विदलितगह्वरः तथा पदविष्टम्भेन पादाक्रमणेन निपीडितः नम्रः सकलः समूलः शैलः संशयं जीवितसन्देहञ्च आरुरोह प्राप इत्यर्थः । अत्र शैलस्य संशयासम्बन्धेऽपि सम्बन्धकथनात् अतिशयोक्तिरलङ्कारः ॥१६॥

पुरो बलानां सघनाम्बुशीकरः
शनैः प्रतस्थे सुरभिः समीरणः ॥२८॥

जयारवक्ष्वेडितनादमूर्च्छितः
शरासनज्यातलवारणध्वनिः।
असम्भवन् भूधरराजकुक्षिषु
प्रकम्पयन् गामवतस्तरे दिशः ॥ २९ ॥

रणायेति। जेता एव जैत्रो जयनशीलः अनुकूल इत्यर्थः। जयतेः तृन्नन्तात् प्रज्ञादित्वात् स्वार्थे अण्प्रत्ययः। तरङ्गितं सञ्जाततरङ्गं यथा तथा आलम्बिता अवस्थिताः केतुसन्ततयो येन सः सह घनैः सान्द्रैः अम्बुशीकरैः वर्त्तमानः सघनाम्बुशीकरः सुरभिः समीरणः वायुः रणाय त्वरां प्रदिशन्निव त्वरयन्निव बलानां सैन्यानां पुरः अग्रे शनैः प्रतस्थे प्रस्थितः ववौ इत्यर्थः ॥२८॥

जयेति। जयारवैः वन्दिनां जयजयेति शब्दैः क्ष्वेडितनादैः सिंहनादैश्च मूर्च्छितो वर्द्धितः शरासनज्यानां धनुर्गुणानां तलवारणानां च ध्वनिः भूधरराजकुक्षिषु गिरिगुहासु असम्भवन् अमान् अवकाशम् अलभमान इत्यर्थः। अत एव गां भुवं प्रकम्पयन्। एतेन बलानां बाहुल्यमुक्तम्। दिशोऽवतस्तरे व्यानशे। स्तृतश्च संयोगादेर्गुणः। अत्र मूर्च्छापदार्थस्य विशेषणगत्या असम्भवनहेतुत्वात् काव्यलिङ्गं रूपकं तु गिरिकुक्षिरूपापेक्षया ध्वनेराधेयस्य आधिक्योक्तेः अधिकालङ्कारस्य तेभ्यश्च इयम् असम्भवन् इति व्यञ्जकं विना उत्थाप्यमानोपात्तमूर्च्छांगुणनिमित्ता प्रतीयमाना क्रियोत्प्रेक्षा तैः अङ्गाङ्गिभावेन सङ्कीर्यते इति सङ्करः ॥२९॥

निशातरौद्रेषु विकाशतां गतैः
प्रदीपयद्भिः ककुभामिवान्तरम् ।
वनेसदां हेतिषु भिन्नविग्रहैः
विपुस्फुरे रश्मिमतो मरीचिभिः ॥ ३० ॥

उदूढवक्षःस्थगितैकदिङ्मुखो
विकृष्टविस्फारितचापमण्डलः ।
वितत्य पक्षद्वयमायतं बभौ
विभुर्गणानामुपरीव मध्यगः ॥ ३१ ॥

निशातेति । निशाताः तीक्ष्णाः अत एव रौद्राः भीषणाश्च ये तेषु निशातरौद्रेषु । विशेष्यविशेषणयोः अन्यतरविशेष्यत्वविवक्षायाम् इष्टत्वात् विशेषणसमासः । वने सीदन्ति इति वनेसदां वनेचराणाम् । "सत्सूद्विष" इत्यादिना क्विप् । "तत्पुरुषे कृति बहुलम्" इत्यलुक् । हेतिषु आयुधेषु । "हेतिः शस्त्रेऽपि पुंस्त्रियोः" इति केशवः । भिन्नविग्रहैः संक्रान्तमूर्त्तिभिः अतएव विकाशतां विस्तृत्वरतां गतैः अतएव ककुभां दिशाम् अन्तरं प्रदीपयद्भिः प्रज्वालयद्भिः इव स्थितैः इति उत्प्रेक्षा । रश्मिमतः सूर्य्यस्य । "मादुपधायाश्च मतोर्वोऽयवादिभ्यः" इति मतुपो मकारस्य न वकारः । मरीचिभिः करैः । "भानुः करो मरीचिः स्त्रीपुंसयोः" इत्यमरः । विपुस्फुरे बभासे । स्फुरतेः भावे लिट् ॥३०॥

उदूढेति । उदूढेन उन्नतेन वक्षसा स्थगितम् आच्छादितम् एकम् एकतरं दिङ्मुखं येन सः विकृष्टम् आकृष्टम् अत एव विस्फारितं निर्घोषितं चापमण्डलं येन स विभुः शिवः आयतं

सुगेषु दुर्गेषु च तुल्यविक्रमैः
जवादहं पूर्विकया यियासुभिः ।
गणैरविच्छेदनिरुद्धमाबभौ
वनं निरुच्छ्वासमिवाकुलाकुलम् ॥ ३२ ॥
तिरोहितश्वभ्रनिकुञ्जरोधसः
समश्नुवानाः सहसातिरिक्तताम् ।

विस्तृतं पक्षद्वयं पार्श्वद्वयं वितत्य स्वमहिम्ना व्याप्य। "पक्षः साध्यगरुत्पार्श्वसहायबलभित्तिषु" इति वैजयन्ती। गणानां मध्यगो मध्यस्थोऽपि उपरि स्थित इव बभौ। सर्वोन्नतत्वात् तथा लक्षित इत्यर्थः ॥३१॥

सुगेष्विति। सुखेन दुःखेन च गच्छन्ति एषु इति सुगेषु सुगमेषु दुर्गेषु दुर्गमेषु च समविषमदेशेषु इत्यर्थः। सुदुरोः अधिकरणार्थे डो वक्तव्यः अतएव टिलोपः तुल्यविक्रमैः लाघवात् समसञ्चारैः। जवादहंपूर्विकया अहमहमिकया। "अहंपूर्वमहंपूर्वमित्यहंपूर्विका स्त्रियाम्" इत्यमरः। यियासुभिः यातुमिच्छुभिः। यातेः सन्नन्तात् उप्रत्ययः। गणैः प्रमथैः। मनोज्ञादित्वात् वुञ्प्रत्ययः पृषोदरादित्वात् वृद्ध्यभावः। "गणाः प्रमथसङ्घौघाः" इति वैजयन्ती। अविच्छेदेन निरुद्धं अत एव आकुलाकुलम् आकुलप्रकारम्। "प्रकारे गुणवचनस्य" इति द्विर्भावः। वनं निरुच्छ्वासं निरुद्धप्राणम् इव आबभौ इति उत्प्रेक्षा ॥३२॥

तिरोहितेति। किरातसैन्यैः तिरोहितानि छन्नानि श्वभ्रनिकुञ्जरोधांसि गर्त्तकुञ्जतटानि यासां ताः अत एव भुवः प्रदेशाः सहसा अतिरिक्तताम् उत्तानतां समश्नुवानाः आप्नुवत्यः।

किरातसैन्यैरपिधाय रेचिता
भुवः क्षणं निम्नतयेव भेजिरे ॥ ३३ ॥
पृथूरुपर्य्यस्तबृहल्लताततिः
जवानिलाघूर्णितशालचन्दना ।
गणाधिपानां परितः प्रसारिणी
वनान्यवाञ्चीव चकार संहतिः ॥ ३४ ॥
ततः सदर्पं प्रतनुं तपस्यया
मदस्रुतिक्षाममिवैकवारणम् ।

अपिधाय आच्छाद्य रेचिता रिक्तीकृताः मुक्ताः क्षणं निम्नतया गाम्भीर्य्येण भेजिरे इव प्राप्ता इवेत्युत्प्रेक्षा । सैन्यैः या भुवो व्याप्तास्ता उत्तानाः प्रतीयन्ते तैः मुक्तास्ता एव निम्नाः प्रतीयन्ते इत्यर्थः ॥३३॥

पृथ्विति । पृथुभिः विशालैः ऊरुभिः पर्य्यस्ताः क्षिप्ताः बृहत्यो लताततयो यया सा जवानिलेन वेगमारुतेन आघूर्णिताः भ्रमिताः शालाः सर्जतरवः चन्दनानि च यया सा । "प्राकारवृक्षयोः शालः शालः सर्जतरुः स्मृतः" इति शाश्वतः । परितः सर्वत्र प्रसारिणी प्रसरणशीलाः गणाधिपानां संहतिः समूहो वनानि अवाञ्चि न्युब्जानीव नीचानीव चकार इत्युत्प्रेक्षा । अवाञ्चति अधोभवति अवपूर्वादञ्चतेः क्विप् । "स्यादवाङप्यधोमुखः" इत्यमरः ॥ ३४ ॥

अथ अष्टभिः श्लोकैः अर्जुनं विशंसन् गणानां तदभियोगमाह । तत इत्यादि । ततः सदर्पं सगर्वं सान्तःसारं तपस्यया तपश्चर्य्यया । तपस्यतेः क्यजन्तात् स्त्रियामप्रत्यये टाप् । प्रतनुं

परिज्वलन्तं निधनाय भूभृतां
दहन्तमाशा इव जातवेदसम् ॥ २५ ॥
अनादरोपात्तधृतैकसायकं
जयेऽनुकूले सुहृदीव सस्पृहम् ।
शनैरपूर्णप्रतिकारपेलवे
निवेशयन्तं नयने बलोदधौ ॥ २६ ॥
निषण्णमापत्प्रतिकारकारणे
शरासने धैर्य्य इवानपायिनि ।

क्षमम् अतएव मदस्रुत्या मदच्चरणेन क्षामं क्षमम् ।"क्षायोमः" इति निष्ठातकारस्य मकारः । एकवारणम् एकाकिनं गजम् इव स्थितम् इत्युपमा । पुनः भूभृतां राज्ञां निधनाय नाशाय परिज्वलन्तं तेजस्विनम् अतएव आशा दिशो दहन्तं जातवेदसम् अग्निम् इव स्थितम् इत्युपमालङ्कारः । "कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात्" इत्यमरः ॥२५॥

अनादरेति । पुनश्च अनादरेण अवगणनया उपात्तो निषङ्गात् उद्धृतो धृतश्च एकः सायको येन तं तथा अनुकूले सुहृदीव जये सस्पृहं जयमिच्छन्तम् इत्यर्थः । पुनः अपूर्णः न्यूनः प्रतिकारो बाणाहरणप्रत्यर्पणरूपो यस्य सः अतएव पेलवो लघुः तस्मिन् अपूर्णप्रतिकारपेलवे बलोदधौ सेनासमुद्रे शनैः असम्भ्रमेण नयने दृष्टी निवेशयन्तम् इति वीरस्वभावोक्तिः । बलम् उदधिः इव इति उपमितसमासः । "पेषवासवाहनधिषु च" इत्युदकस्य उदादेशः ॥२६॥

निषण्णमिति । पुनश्च आपदां प्रतीकारस्य कारणसाधने

अलङ्घनीयं प्रकृतावपि स्थितं
निवातनिष्कम्पमिवापगापतिम् ॥ ३७ ॥
उपेयुषीं बिभ्रतमन्तकद्युतिं
बधाददूरे पतितस्य दंष्ट्रिणः ।
पुरः समावेशितसत्पशुं द्विजैः
पतिं पशूनामिव हूतमध्वरे ॥ ३८ ॥
निजेन नीतं विजितान्यगौरवं
गभीरतां धैर्य्यगुणेन भूयसा ।
वनोदयेनेव घनोरुवीरुधा
समन्धकारीकृतमुत्तमाचलम् ॥ ३९ ॥

अनपायिनि स्थिरे शरासने एवम्भूते धैर्य्ये इव निषसं स्थितं प्रकृतौ स्वभावे स्थितमपि निर्विकारमपि इत्यर्थः। अतएव अलङ्घनीयम् अनतिक्रमणीयम् अतएव निवातनिष्कम्पं वाताभावान्निश्चलम्। "निवातावाश्रयावातौ" इत्यमरः। आपगापतिं समुद्रमिव स्थितम् ॥३७॥

उपेयुषीमिति। पुनश्च अदूरे समीपे पतितस्य दंष्ट्रिणो वराहस्य। व्रीह्यादित्वादिनिप्रत्ययः। बधात् हेतोः उपेयुषीं प्राप्तम् अन्तकस्य इव यमस्य इव द्युतिस्तां बिभ्रतं धारयन्तम्। तथाच द्विजैः ब्राह्मणैः अध्वरे यज्ञे। "यज्ञः सवोऽध्वरो यागः" इत्यमरः। हूतम् आहूतं पुरः अग्रे समावेशितः स्थापितः सत्पशुः यज्ञीयपशुः यस्य तं पशूनां पतिं रुद्रमिव स्थितम् ॥३८॥

निजेनेति। पुनश्च निजेन नैसर्गिकेण भूयसा बहुलेन धैर्य्यमेव गुणस्तेन विजितम् अन्येषां गौरवं गाम्भीर्य्यं यस्मिन्

महर्षभस्कन्धमनूनकन्धरं
बृहच्छिलावप्रघनेन वक्षसा।
समुज्जिहीर्षुं जगतीं महाभरां
महावराहं महतोऽर्णवादिव ॥ ४० ॥
हरिन्मणिश्याममुदग्रविग्रहं
प्रकाशमानं परिभूय देहिन:।

कर्माणि तथा गभीरतां दुरवगाहत्वं नीतम्। अत एव घना: सान्द्रा उरवश्च महत्यो वीरुधो लताश्च यस्मिन् तेन घनोरुवीरुधा वनोदयेन अरण्यप्रादुर्भावेण समन्धकारीकृत दुरवगाहीकृतम् उत्तमाचलम् इव स्थितं समन्ततोऽन्धकारो यस्य स इति विग्रह: ॥ ३९ ॥

महर्षभेति। महर्षभस्य महावृषभस्य स्कन्ध इव स्कन्धौ अंसौ यस्य तम्। उपमानपूर्वपदत्वात् उत्तरस्कन्धलोप:। "ऋषभो वृषभो वृष:" इत्यमर:। "स्कन्धो भुजशिरोऽंशोऽस्त्री" इत्यमर:। अनूनकन्धरं स्थूलग्रीवम्। "अथ ग्रीवायां शिरोधि: कन्धरेत्यपि" इत्यमर:। बृहच्छिलावप्रं महाशिलातटं तद्वत् घनेन कठिनेन वक्षसा उपलक्षितम्। महाभरां दुष्टै: अतिभारवतीं जगतीं महीं समुज्जिहीर्षुं दुष्टराजकार्णवात् समुद्धर्तुमिच्छुम्। अत एव महतोऽर्णवात् जगतीं समुज्जिहीर्षुम् उक्तविशेषणविशिष्टञ्च वराहमिव स्थितम्। अर्थसाधर्म्यात् इयमुपमा न श्लेष: शब्दमात्रसाधर्म्येण तस्य विधानात् इति रहस्यम् ॥ ४० ॥

हरिदिति। पुनश्च हरिन्मणिश्यामं मरकतमणिश्यामलम् उदग्रविग्रहम् उदारमूर्त्तिं देहिन: सत्वान् परिभूय प्रकाशमानं

मनुष्यभावे पुरुषं पुरातनं
स्थितं जलादर्श इवांशुमालिनम् ॥ ४१ ॥
गुरुक्रियारम्भफलैरलङ्कृतं
गतिं प्रतापस्य जगत्प्रमाथिनः ।
गणाः समासेदुरनीलवाजिनं
तपात्यये तोयघना घना इव ॥ ४२ ॥

कुलकम् ।

यथास्वमाशंसितविक्रमाः पुरा
मुनिप्रभावक्षततेजसः परे ।
ययुः क्षणादप्रतिपत्तिमूढतां
महानुभावः प्रतिहन्ति पौरुषम् ॥ ४३ ॥

जलम् एव आदर्शः मुकुरः तस्मिन् अंशुमालिनं सूर्य्यम् इव मनुष्यभावे मनुष्यरूपे स्थितं पुरातनं पुरुषं यो वदरीतपोवननिवासी नारायणसहचरो नरो नाम स एव अयमित्यर्थः ॥४१॥

गुर्विति। गुरुभिः क्रियारम्भाणां फलैः अलङ्कृतं सफलकर्मारम्भम् इत्यर्थः। जगत्प्रमाथिनः जगद्विजयिनः प्रतापस्य तेजसो गतिं स्थानम् अतोऽस्य बहूनाम् एकलक्ष्यत्वञ्च युज्यते इति सन्दर्भाभिप्रायः। पूर्वोक्तविशेषणविशिष्टम् अनीलवाजिनं श्वेताश्वम् अर्जुनं गणाः प्रमथादयः तपात्यये तोयघनाः तोयभरिता वार्षिका इत्यर्थः घना मेघा इव महाचलम् इति शेषः। समासेदुः अवापुः इत्यर्थः ॥ ४२ ॥

यथास्वमिति। पुरा पूर्वं स्वं स्वम् अनतिक्रम्य यथास्वम् अहम् एवेनं जेष्यामि इति आशंसिताः काङ्क्षिताः कथिता वा विक्रमा

ततः प्रजह्रे सममेव तत्र तैः
अपेक्षितान्योन्यबलोपपत्तिभिः।
महोदयानामपि सङ्घवृत्तितां
सहायसाध्याः प्रदिशन्ति सिद्धयः॥ ४४ ॥

किरातसैन्यादुरुचापनोदिताः
समं समुत्पेतुरुपात्तरंहसः।
महावनादुन्मनसः खगा इव
प्रवृत्तपत्रध्वनयः शिलीमुखाः॥ ४५ ॥

य: ते परे शत्रवः मुनिप्रभावात् हततेजसो हतप्रभावाः सन्तः अप्रतिपत्तिमूढतां मोहान्धतां ययुः। तथाहि महानुभावोऽतिप्रतापः पौरुषं पुरुषस्य चेष्टितं प्रतिघ्नन्ति नाशयन्ति ॥४३॥

तत इति। ततः एकैकस्य अशक्तौ अपेक्षिता वाञ्छिता अन्योन्यबलोपपत्तिः अन्योन्यशक्त्यवष्टम्भः यैः तैः प्रमथैः तत्र अर्जुने। क्रियाधारत्वात् सप्तमी। समं युगपदेव प्रजह्रे प्रहृतम्। भावे लिट्। तथाहि। सहायसाध्याः सिद्धयः कार्य्यसिद्धयो महोदयानां महानुभावानाम् अपि। सङ्घेन वृत्तिः व्यापारो येषां तेषां भावस्तत्ता तां सङ्घवृत्तितां सम्भूयकारितां प्रदिशन्ति। अतो गणानाम् अपि सम्भूयकारित्वं न दोष इति भावः ॥४४॥

किरातेति। उरुभिः बृहद्भिः चापैः नोदिताः प्रक्षिप्ताः उपात्तरंहसः प्राप्तवेगाः प्रवृत्तपत्रध्वनयः सञ्जातपक्षस्वनाः शिलीमुखा बाणाः महावनात् उन्मनसः क्वापि गन्तुम् उत्सुकाः

गभीररन्ध्रेषु भृशं महीभृतः
प्रतिस्वनैरुन्नमितेन सानुषु ।
धनुर्निनादेन जवादुपेयुषा
विभिद्यमाना इव दध्वनुर्दिशः ॥ ४६ ॥

विधूनयन्ती गहनानि भूरुहां
तिरोहितोपान्तनभो दिगन्तरा ।
महीयसी वृष्टिरिवानिलेरिता
रवं वितेने गणमार्गणावलिः ॥ ४७ ॥

त्रयीमृतूनामनिलाशिनः सतः
प्रयाति पोषं वपुषि प्रहृष्यतः

तथा उक्तविशेषणविशिष्टाश्च खगाः पक्षिण इव किरातसैन्यात् सम समन्ततः समुत्पेतुः ॥४५॥

गभीरेति। गभीररन्ध्रेषु गम्भीरगह्वरेषु महीभृतः सानुषु ये प्रतिस्वनाः तैः भृशम् उन्नमितेन उत्थापितेन दीर्घीकृतेन जवात् उपेयुषा प्राप्तवता धनुषो निनादेन दिशो विभिद्यमाना विदीर्य्यमाणा इव दध्वनुः ध्वनिं चक्रुः ॥४६॥

विधूनयन्तीति। भूरुहां गहनानि वनानि। "अटव्यरण्यं विपिनं गहनं काननं वनम्" इत्यमरः। विधूनयन्ती कम्पयन्ती तिरोहितानि छादितानि उपान्तानि प्रान्तानि नभोऽन्तरीक्षं दिगन्तराणि च यया सा गणमार्गणावलिः प्रमथशरसंहतिः अनिलेन वायुना ईरिता प्रेरिता महीयसी वृष्टिरिव रवं वितेने विस्तारयामास ॥४७॥

त्रयीमिति। ऋतूनां त्रयीं षण्मासान्। कालाध्वनोरत्यन्त-

रणाय जिष्णोर्विदुषेव सत्वरं
घनत्वमीये शिथिलेन वर्मणा ॥ ४८ ॥
पतत्सु शस्त्रेषु वितत्य रोदसी
समन्ततस्तस्य धनुर्दुधूषतः ।
सरोषमुल्केव पपात भीषणा
बलेषु दृष्टिर्विनिपातशंसिनी ॥४९॥



दिशः समूहन्निव विक्षिपन्निव
प्रभां रवेराकुलयन्निवानिलम् ।

सयोगे द्वितीया । अनिलाशिनो वायुभक्षकस्य कृशस्य इत्यर्थः । सतः तथापि रणाय रणं कर्त्तुं प्रहृष्यतः उत्सहमानस्य "क्रियार्थो" इत्यादिना चतुर्थी । जिष्णोः अर्जुनस्य वपुषि पोषम् उपचयं प्रयाति गच्छति सति शिथिलेन प्रथमम् इति शेषः । वर्मणा कवचेन विदुषा इव अनन्तरकरणीयं जानता इवेति उत्प्रेक्षा । सत्वरं शीघ्रं घनत्वं दृढ़त्वमीये प्राप्तम् अन्यथानुपयोगादिति भावः । इणः कर्मणि लिट् ॥४८॥

पततस्विति । शस्त्रेषु रोदसी द्यावापृथिव्यौ । "द्यावा-पृथिव्यौ रोदस्यौ" इत्यमरः समन्ततो वितत्य व्याप्य पतत्सु सत्सु धनुः दुधूषतः कम्पितुम् इच्छतः आस्फालयत इत्यर्थः । धूञः सन्नन्ताच्छतृप्रत्ययः । "स्वरतिसूतिसूयतिधूञूदितो वा" इति विकल्पादिड़भावः । तस्य अर्जुनस्य सम्बन्धिनी भीषयत इति भीषणा । नन्द्यादित्वाल्ल्युः । विनिपातशंसिनी विनाश-सूचिका दृष्टिः उक्तविशेषणा उल्केव बलेषु सरोषं यथा तथा पपात ॥४९॥

मुनिश्चचाल क्षयकालदारुणः
क्षितिं सशैलां चलयन्निषुभिः ॥५०॥
विमुक्तमाशंसितशत्रुनिर्जयैः
अनेकमेकावसरं वनेचरैः ।
स निर्जघानायुधमन्तरा शरैः
क्रियाफलं काल इवातिपातितः ॥५१॥
गतैः परेषामविभावनीयतां
निवारयद्भिर्विपदं विदूरगैः ।

दिश इति । क्षयकालः कल्पान्तकाल इव । "संवर्त्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि" इत्यमरः । दारुणो रौद्रः मुनिः अर्जुनः इषुभिः बाणैः दिशः समूहन्निव एकत्र समाहरन् इव अन्यथा तासां पारदर्शनं न स्यादिति भावः । रवेः प्रभां विक्षिपन् इव अधःप्रक्षिपन् इव अन्यथा सा कथं न दृश्यत इति भावः । तथा अनिलं वायुम् आकुलयन् इषुभिः अन्तराले आवृण्वन् इव तस्य तथा गतिविघातादिति भावः । सशैलां क्षितिं चलयन् इव कम्पयन् इव तथा सङ्क्षोभादिति भावः । चचाल गतिम् अकरोत् । सर्वत्र इवशब्दः उत्प्रेक्षायाम् ॥५०॥

विमुक्तमिति । आशंसितः काङ्क्षितः शत्रुनिर्जयो यैः तैः । अहमहमिकया शत्रुं विजिगीषद्भिः इत्यर्थः । वनेचरैः एकावसरं समकालम् । अत्यन्तसंयोगे द्वितीया । विमुक्तं प्रयुक्तम् अनेकम् आयुधम् जातावेकवचनम् । सोऽर्जुनः क्रियाफलम् अतिपातितोऽतिक्रान्तः काल इव अतिक्रान्तकालस्य कर्मणो निष्फलत्वात् इति भावः । अन्तरा मध्ये शरैः निजघान ॥५१॥

गतैरिति । पाण्डुनन्दनोऽर्जुनः परेषाम् अविभावनीयतां

भृशं बभूवोपचितो वृहत्फलैः
शरैरुपायैरिव पाण्डुनन्दनः ॥५२॥
दिवः पृथिव्याः ककुभां नु मण्डलात्
पतन्ति बिम्बादुत तिग्मतेजसः ?।
सकृद्विकृष्टादथ कार्मुकात् मुनेः
शराः शरीरादिति तेऽभिमेनिरे ॥५३॥
गणाधिपानामविधाय निर्गतैः
परासुतां मर्म्मविदारणैरपि।

नवप्रयोगात् अन्यत्र गूढ़प्रयोगाच्च अदृश्यताम् अप्रकाश्यतां च गतैः विपदम् अनर्थं निवारयद्भिः विदूरगैः दूरलक्ष्यगैः पर-मण्डलप्रविष्टैश्च वृहत्फलैः आयताग्रैः महालाभैश्च। "फलं बाणाग्रलाभयोः" इति शाश्वतः। शरैः उपायैः समादिभिः इव भृशम् उपचितः प्रवृद्धो बभूव। अत्र शब्दमात्रसाधर्म्यात् प्रकृताप्रकृतश्लेषः। उपमा इति केचित् ॥५१॥

दिव इति। शराः दिवोऽन्तरिक्षात् पृथिव्या भूगोलाद्वा ककुभां मण्डलात् नु दिशां मण्डलाद्वा ? उत तिग्मतेजसोऽर्कस्य बिम्बात् मण्डलाद्वा ? अथ वा सकृद्विकृष्टात् कार्मुकाद्वा मुनेः शरीरात् वा पतन्तीति ते गणा अभिमेनिरे ज्ञातवन्तः। अन्यथा कथम् अमी विश्वम् अन्तर्धाय शराः सम्भाव्यन्ते इति भावः। अत्र सर्वतः शरसम्पातदर्शनात् सम्भावनया पृथि-व्यादीनाम् अन्यतमस्य अपादानत्वोत्प्रेक्षा। सा च प्रतीयमाना व्यञ्जकाप्रयोगात्। नुशब्दादयस्तु संशये ॥५२॥

गणेति। मर्म्मविदारणैः अपि मर्म्मस्थानानि एव विदारयद्भिः

जवादतीये हिमवानधोमुखैः
कृतापराधैरिव तस्य पत्रिभिः ॥५४॥
द्विषां क्षतीर्याः प्रथमे शिलीमुखाः
विभिद्य देहावरणानि चक्रिरे।
न तासु पेते विशिखैः पुनर्मुनेः
अरुन्तुदत्वं महतां ह्यगोचरः ॥५५॥
समुज्झिता यावदराति निर्य्यती
सहैव चापात् मुनिबाणसंहतिः।

अपीत्यर्थः। गणाधिपानां परासुतां मरणम् अविधाय अकृत्वा निर्गतैः तेषाम् अमर्त्यत्वात् इति भावः। तस्य मुनेः पत्रिभिः शरैः कृतापराधैः इव स्वामिकार्य्याकरणात् सापराधैः इवेत्युत्प्रेक्षा। अधोमुखैः सद्भिः जवात् हिमवान् अतीये अतिचक्रमे तत्र प्रविष्टम् इत्यर्थः लज्जितस्य क्वचिन्निलयनम् उचितम् इति भावः ॥५४॥

द्विषामिति। प्रथमे प्रथममुक्ता इत्यर्थः। शिलीमुखाः मुनिशराः द्विषां देहावरणानि वर्म्माणि विभिद्य याः क्षतीः प्रहारान् चक्रिरे तासु क्षतिषु पुनः पश्चात् प्रयुक्तैः मुनेः विशिखैः न पेते न पतितम्। पिष्टपेषणदोषापातात् इति भावः। तथाहि अरुन्तुदत्वं पीड़ितपीड़नं सताम् अगोचरो हि। सन्तः पीड़ितपीड़ां न कुर्वन्ति इत्यर्थः। "न हन्याद् व्यसनप्राप्तं नार्त्तं नातिपरिक्षतम्" इति निषेधस्मरणादिति भावः अरुः। व्रणं तुदतीति अरुन्तुदः। "व्रणोऽस्त्रियामीर्ममरुः" इत्यमरः। "विध्वरुषोस्तुदः" इति खश्प्रत्ययः। "अरुर्द्विषदजन्तस्य मुम्" इति मुमागमः ॥५५॥

प्रभा हिमांशोरिव पङ्कजावलिं
निनाय सङ्कोचमुमापतेश्चमूम् ॥ ५६ ॥
अजिह्ममोजिष्ठममोघमक्लमं
क्रियासु बह्वीषु पृथङ्नियोजितम्।
प्रसेहिरे सादयितुं न सादिताः
शरौघमुत्साहमिवास्य विद्विषः ॥ ५७ ॥

समुज्झितेति। यावन्तोऽरातयो यावदराति "यावदवधारणे" इति अव्ययीभावः। यावदराति यथा तथा समुज्झिता अराति-समसंख्यया मुक्ता मुनिचापात् सह सम्भूय एव निर्यती निष्क्रा-मन्ती। तादृक् तस्य कौशलमिति भावः। यातेः शतरि ङीप्। मुनिबाणसंहतिः उमापतेः चमूं हिमांशोः प्रभा पङ्कजावलिम् इव सङ्कोचं निनाय प्रापयामास। दुहादिपाठान्नयतिर्द्वि-कर्मकः ॥५६॥

अजिह्ममिति। अजिह्मं स्वरूपतो गत्या वा अवक्रम्। अन्यत्र तु जिह्मस्थानप्रवृत्तो न भवतीति अजिह्मः तम्। ओजि-ष्ठम् ओजस्विनं सारवत्तमं तेजिष्ठं च। उभयत्रापि ओजस्वि-शब्दाद्विन्यन्तादिष्ठन् "विन्मतोर्लुक्" इति लुक् टिलोपश्च। अमोघम् अवन्ध्यम् अक्लमं निरन्तरव्यापारेऽपि अक्लान्तं बह्वीषु क्रियासु छेदनभेदनपातनादिकर्मसु पृथग्भेदेन नियोजितं कर्मानुगुण्येन विनियुक्तमित्यर्थः। अस्य मुनेः शरौघम् उत्सा-हम् औत्सुक्यम् इव वीरस्थायिभावभूतं प्रयत्नविशेषम् इवेत्यर्थः। सादिताः कर्षिताः विद्विषः शत्रवः सादयितुं प्रतिकर्त्तुं न प्रसेहिरे न शेकुः। तस्य उत्साहवत् एव शरवर्षं दुर्धर्षम् अभूत् इति भावः ॥५७॥

शिवध्वजिन्यः प्रतियोधमग्रतः
स्फुरन्तमुग्रेषुमयूखमालिनम् ।
तमेकदेशस्थमनेकदेशगा
निदध्युरर्कं युगपत् प्रजा इव ॥ ५८ ॥

मुनेः शरौघेण तदुग्ररंहसा
बलं प्रकोपादिव विष्वगायता ।
विधूनितं भ्रान्तिमियाय सङ्गिनीं
महानिलेनेव निदाघजं रजः ॥ ५९ ॥

शिवेति । अनेकदेशगा नानादेशस्थाः शिवध्वजिन्यो हर-सेनाः । उग्रेषवो मयूखा इवेति उपमितसमासः । अन्यत्र तु उग्रेषव इव मयूखा इति । मयूरव्यंसकादित्वात् समासः । तेषां माला अस्यास्तीति तम् उग्रेषुमयूखमालिनम् । व्रीह्या-दित्वादिनिः । एकदेशस्थम् एकत्रैव स्थितं मुनिम् अर्कं प्रजा इव युगपत् प्रतियोधं योधं योधं प्रति । "अव्ययं विभक्ति" इत्यादिना प्रत्यर्थे वीप्सायामव्ययीभावः । अग्रतः स्फुरन्तं निदध्युः ददृशुः । यथा एकोऽर्कः एकत्रैव स्थितोऽपि नानादेश-स्थानाम् अपि प्रतिपुरुषं मम एवाग्रे वर्त्तत इति युगपत् प्रतीयते तद्वत् बाणवर्षी मुनिः अपि प्रतियोधं तथा एव प्रत्यभात् इत्यर्थः ॥५८॥

मुनेरिति । प्रकोपात् अमर्षात् इव विष्वक् समन्तात् आयता आगच्छता उग्ररंहसा तीव्रवेगेन मुनेः शरौघेण उक्त-विशेषणेन महानिलेन वात्यया निदाघजं ग्रीष्मोत्थं रज इव विधूनितं व्याहतं तद्बलं प्रमथानां सैन्यं सङ्गिनीम् अनुबन्धि-

तपोबलेनैष विधाय भूयसी:
तनूरदृश्याः स्विदिषून्निरस्यति ?।
अमुष्य मायाविहतं निहन्ति नः
प्रतीपमागत्य किमु स्वमायुधम् ?॥ ६० ॥

हृता गुणैरस्य भयेन वा मुने:
तिरोहिताः स्वित् प्रहरन्ति देवताः ?।
कथं न्वमी सन्ततमस्य सायका
भवन्त्यनेके जलधेरिवोर्मयः ?॥ ६१ ॥

नोम् अविच्छिन्नाम् इति यावत् भ्रान्तिम् अनवस्थानम् इयाय प्राप ॥५८॥

अथ त्रिभिः विशेषकमाह। तप इत्यादिना। एष मुनि. तपोबलेन तपःसामर्थ्येन भूयसीः बह्वीः अदृश्याः तनूः आत्मनः शरीराणि विधाय सृष्ट्वा इषून्निरस्यति स्वित् ? क्षिपति किम् ? अथवा अमुष्य अस्य मुनेः मायया विहतं प्रतिहतं स्वं स्वकीयम् इव आयुधं प्रतीपं प्रतिकूलम् आगत्य प्रत्याहृत्येत्यर्थः नोऽस्माकं निहन्ति किम् ? "जासिनिप्रहण" इत्यादिसूत्रेण कर्मणि षष्ठी शेषाविवक्षायान्तु द्वितीया ॥६०॥

हृता इति। यद्वा अस्य मुनेः गुणैः शान्त्यादिभिः हृता आकृष्टा भयेन दरेण वा। भयात् बिभ्यत्य एवेत्यर्थः। देवताः तिरोहिताः सत्यः प्रहरन्ति स्वित् ?। तत् कुतः ? अन्यथा अस्य मुनेः अमी सायका जलधेः ऊर्मय इव कथं नु सन्ततमनेके असङ्ख्याः भवन्ति। अन्यत्र पञ्चासम्भवेन न स भवतीत्यर्थः। किमिति पृच्छन्त्यो देवता युध्यन्त इत्याह। गुणैः हृता भयेन

जयेन कच्चिद्विरमेदयं रणात्
भवेदपि स्वस्ति चराचराय वा ? ।
ततापकीर्णा नृपसूनुमार्गणैः
इति प्रतर्काकुलिता पताकिनी ॥ ६२ ॥

अमर्षिणा कृत्यमिव क्षमाश्रयं
मदोद्धतेनेव हितं प्रियं वचः ।
बलीयसा तद्विधिनेव पौरुषं
बलं निरस्तं न रराज जिष्णुना ॥ ६२ ॥

वा । एतेन गुणैः आवर्त्तिताः प्रीत्या विभ्यत्यः अस्माद् वर्त्तमाना इत्यर्थः । किमस्य वितर्कद्वयस्य मूलमित्याह । कथमिति । अस्मात् कथं जलधेः ऊर्मयो यथा एकस्यैव सायकाः सन्ततम अतिबहवो भवन्ति । एतच्चोद्यमन्यसपक्षसम्भवेन न सम्भवति इत्यर्थः । एकशब्दस्य एकशेषे कृत एक इति रूपम् इति केचित् । नुशब्दस्त्वन्यार्थे ॥६१॥

जयेनेति । कच्चिदयं रणाज्जयेन विरमेत् । अस्मान् जित्वा कच्चिदयं युद्धम् उपसंहरेत् इत्यर्थः । अपि चराचराय स्वस्ति स्वस्ति भवेत्? कच्चित् स्थावरजङ्गमं जगत् न विनश्येत् इत्यर्थः कच्चिदपि इह सम्भावनायाम् । प्रार्थनायां लिङ् । इति प्रतर्काकुलिता पूर्वोक्ता ये प्रतर्कास्तैः आकुलिता विह्वला । अत्र सहेतुकं विशेषणमाह । नृपसूनुमार्गणैः अर्जुनबाणैः कीर्णा क्षिप्ता पताकिनी ततापतापं प्राप ॥६२॥

अमर्षिणेति । जिष्णुना निरस्तं बलं न रराज । किमिव केन क्षिप्तं न शोभते क्षमाश्रयं कृत्यं कार्य्यम् अमर्षिणा निर

प्रतिदिशं प्लवगाधिपलक्ष्मणा
विशिखसंहतितापितमूर्त्तिभिः ।
रविकरग्लपितैरिव वारिभिः
शिवबलैः परिमण्डलता दधे ॥ ६४ ॥
प्रविततशरजालच्छन्नविश्वान्तराले

स्तम्। यथा क्षमामाध्यं हि कृत्यम् इव सामर्षैः निरस्यते तच्चा-निरस्तं न शोभते। यथा च मदोद्धतेन पुंसा हितं प्रियवचनम् इव तिरस्कृतं न राजते। मदः पौरुषादिधर्मः तेनोद्धतोऽवलिप्तः तेन बलीयसा च विधिना दैवेन पौरुषम् इव। निरस्तं सत् न राजते। बलीयसा दैवेन प्रतिहतपुरुषव्यापारस्य नैष्फल्याद्दैवः जिष्णुरपि बलीयान् इति भावः ॥ ६३ ॥

प्रतिदिशमिति। प्लवगानाम् अधिपोऽधीशो लक्ष्म यस्य तेन वानरचिह्नेन। "कपिप्लवङ्गप्लवग" इति। "चिह्नं लक्ष्म च लक्षणम्" इति च अमरः। प्लुतिरूप इत्यर्थः। विशिखसंहति-तापितमूर्त्तिभिः इति विशिखा वाणाः तेषां संहतयः समूहाः। "स्त्रियां तु संहतिर्वृन्दम्" इत्यमरः। ताभिः तापिताः पीड़िता मूर्त्तयो देहाः येषां तैः तथाभूतैः शरनिकरकर्त्तितकलेवरैः इत्यर्थः। शिवबलैः प्रमथसैन्यैः कर्त्तृभिः रविकरेण ग्लपितैः तप्तैः वारिभिः। उदकैः इव प्रतिदिशं दिक्षु परिमण्डलता परितः चक्राकारमण्डलता इति यावत्। दधे अधारि प्रतिदिशं मण्डलाकारेण स्थितम् इत्यर्थः। धाञः कर्मणि लिट्। आतप-तप्तं हि नीरं परिभ्रमति तद्वत् निपीड़ित सैन्यं बभ्राम इत्यर्थः द्रुतविलम्बितं छन्दः—"द्रुतविलम्बितमाह नभौ भरौ" इति लक्षणात् ॥ ६४ ॥

विधुवति धनुराविर्मण्डलं पाण्डुसूनौ ।
कथमपि जयलक्ष्मीर्भीतभीता विहातुं
विषमनयनसेनापक्षपातं विषेहे ॥ ६५ ॥
इति अर्जुनाभिगमनो नाम चतुर्दशः सर्गः ॥१४॥

---

## पञ्चदशः सर्गः ।

---

अथ भूतानि वार्त्रघ्नशरेभ्यस्तत्र तत्रसुः ।
भेजे दिशः परित्यक्तमहेष्वासा च सा चमूः ॥१॥

प्रविततेति। प्रवितताानि विस्तृतानि शरजालानि तैः छन्नम आच्छादितं विश्वान्तरालं येन तस्मिन् शरपूरितब्रह्माण्डोदरे पाण्डुसूनौ आविर्मण्डलम् आविर्भूतमण्डलं धनुः आविर्भूतं मण्डलं यस्य धनुष इति वृत्तौ भूतार्थस्य अनुप्रवेशात भूतशब्दस्याप्रयोगः। विधुवति कम्पयति आस्फालयति सति भीतभीतेव भीतप्रकारेव जयलक्ष्मीः विजयश्रीः कथमपि केनचित् प्रकारेण विषमनयनसेनापक्षपातं विहातुं त्यक्तुं विषेहे शशाक इत्यर्थः ॥ ६५ ॥

इति किरातार्जुनीये चतुर्दश-सर्गव्याख्या समाप्ता ।

अथेति। अथ अनन्तरं तत्र रणे भूतानि सर्वप्राणिनः वृत्रं हतवान् इति वृत्रहा इन्द्रः। "ब्रह्मभ्रूणवृत्रेषु क्विप्"। तस्य अपत्यं पुमान् वार्त्रघ्नोऽर्जुनः। "तस्यापत्यम्" इति अण्प्रत्ययः। तस्य शरेभ्यः तत्रसुः बिभ्युः। "वा जॄभ्रमुत्रसाम्" इति विक-

अपश्यद्भिरिवेशानं रणान्निववृते गणैः।
मुह्यत्येव हि कृच्छ्रेषु संभ्रमज्वलितं मनः॥ २॥
खण्डिताशंसया तेषां पराङ्मुखतया तया।
आविवेश कृपा केतौ कृतोच्चैर्वानरं नरम्॥ ३॥

त्यादेत्वाभ्यामल्लोपाभावः। सा चमूश्च इषवोऽस्यन्ते एभिः इति इष्वासाः धनूंषि। "धनुश्चापोऽस्त्रमिष्वासः" इति हेमचन्द्रः। "अकर्त्तरि च कारके संज्ञायाम्" इति करणे घञ्। परित्यक्ता महान्त इष्वासा यया सा परित्यक्तायुधा इत्यर्थः। दिशो भेजे पलायाञ्चक्रे इत्यर्थः। अत्र भूतत्राससेनापलायनयोः समुच्चय-कथनात् भिन्नविषयः क्रियासमुच्चयोऽलङ्कारः। "गुणक्रिया यौगपद्यं समुच्चयः" इति सामान्यलक्षणं तस्य यमकेन संसृष्टिः॥१॥ उपान्त्ययमकम्।

अपश्यद्भिरिति। गणैः प्रमथैः ईशानं स्वामिनं शिवं पुरो-वर्त्तिनम् इति भावः। अपश्यद्भिः इव रणान्निववृते निवृत्तम्। भावे लिट्। तथाहि कृच्छ्रेषु आपत्सु सम्भ्रमेण साध्वसेन ज्वलितं तप्तम्। "सम्भ्रमः साध्वसेऽपि स्यात्" इति विश्वः। मनो मुह्यति एव। अतः पुरोवर्त्तिनोऽपि अदर्शनम् उपपद्यत इति भावः॥२॥

खण्डितेति। खण्डिता ध्वस्ता आशंसा जयाशा यस्याः तया तेषां गणानां सम्बन्धिन्या तया अतिसन्निकृष्टया इत्यर्थः। पराङ्मुखतया रणवैमुख्येन पलायनेन इत्यर्थः। केतौ ध्वजे कृतः आरोपितः उच्चैः उन्नतो वानरो हनूमान् येन तं नरं पुरुषं कपिध्वजम् इत्यर्थः कृपा करुणा आविवेश। तदीय-दुर्दशां दृष्ट्वा स कृपाविष्टोऽभूत् इत्यर्थः यमकालङ्कारः॥३॥

आस्थामालम्ब्य नीतेषु वशं क्षुद्रेष्वरातिषु।
व्यक्तिमायाति महतां माहात्म्यमनुकम्पया॥४॥
स सासिः सासुसूः सासो येयायेयाययाययः।
ललौ लीलां ललोऽलोलः शशीशशिशुशीः शशन्॥५॥

एकाक्षरपादः।

ननु शत्रुषु कथं करुणा? तत्राह। आस्थामिति। आस्थां यत्नम् आलम्ब्य। "आस्था त्वालम्बनास्थानयत्नापेक्षासु कथ्यते" इति विश्वः। वशं नीतेषु क्षुद्रेषु दुष्टेषु अरातिषु शत्रुषु विषये अनुकम्पया कृपया महतां वीराणां माहात्म्यं महानुभावत्वं व्यक्तिं स्फुटताम् आयाति प्राप्नोति। स्वपौरुषनिर्जितेषु अरातिषु अपि करुणा भूषणम् एव महताम् इति भावः॥४॥

स सासिरिति। सहासिना वर्त्तमानः सासिः सखड्गः असून् सुवन्ति प्रेरयन्तीति असुसुवो बाणाः। "षु प्रेरणे" इति धातोः "सत्सूद्विष" इत्यादिना क्विप्। असुसूभिः सह वर्त्तत इति सासुसूः सबाणः। अस्यन्ते क्षिप्यन्ते शरा अनेनेति आसः धनुः "अकर्त्तरि च कारके संज्ञायाम् इति घञ्। आसेन सह वर्त्तत इति सासः सचापः। सर्वत्र "तेन सहेति तुल्ययोगे" इति बहुव्रीहिः। येया यातव्या यानसाध्याः। अयेया अयातव्याः यानं विनैव साध्याः। "अचो यत्" इति यत्प्रत्ययः। येयाश्च अयेयाश्च येयायेयाः तेषां हयानाम् आये स्वर्णगजादिलाभे याति प्राप्नोतीति येयायेयाययः। अयः शुभावहदैवं यातीत्यययः। येयायेयाययश्च असौ अययश्च इति येयाययाययः। याधातोरुभयत्रापि "आतोऽनुपसर्गे कः" इति कप्रत्ययः। अतो ललति विलसतीति ललः। "ललविलासे" पचा-

त्रासजिह्मं यतश्चैतान् मन्दमेवान्वियाय सः ।
नातिपीड़यितुं भग्नानिच्छन्ति हि महौजसः॥६॥
अथाग्रे हसता साचिस्थितेन स्थिरकीर्त्तिना ।
सेनान्या ते जगदिरे किञ्चिदायस्तचेतसा ॥ ७ ॥

निरौष्ठ्यम् ।

मा विहासिष्ट समरं समरन्तव्यसंयतः ।

त्यच् । अलोलोऽचपलः शशिनः ईशः शिवः तस्य शिशुः स्कन्दः तं शृणाति हिनस्तीति शशीशशिशुशीः क्विप् । शशन् प्लुतगतिं कुर्वन् "शश प्लुतगतौ" इति धातोः शतृप्रत्ययः । सोऽर्जुनो लीलां शोभां ललौ प्राप । "ला आदाने" कर्त्तरि लिट् । एकाक्षरपादः ॥५॥

त्रासेति । सोऽर्जुनः त्रासजिह्मं भयक्लिष्टं यथा तथा यतो गच्छतः पलायमानान् इत्यर्थः । एतान् गणान् मन्दमेव अन्वियाय अनुजगाम । तथाहि महौजसो महानुभावाः भग्नान् अतिपीड़यितुं न इच्छन्ति ॥६॥

अथेति । अथ अग्रे बलानाम् इत्यर्थः । हसता तद्भङ्गदर्शनात् स्मयमानेन साचिस्थितेन तन्निवारणाय तिर्य्यगवस्थितेन । "तिर्य्यगर्थे साचि तिरः" इत्यमरः । स्थिरकीर्त्तिना स्वयम् अभङ्गत्वात् इति भावः किञ्चिदोषदायस्तं खिन्नं चेतो यस्य तेन स्वकीयगणभङ्गात् ईषत्खिन्नचित्तेन सेनान्या स्कन्देन । "पार्वतीनन्दनः स्कन्दः सेनानिरग्निभूर्गुहः" इत्यमरः । ते गणाः प्रमथादयो जगदिरे उक्ताः । ओष्ठ्यवर्णाभावात् निरौष्ठ्यमेतत् ॥७॥

अथ एकविंशतिश्लोकैः स्कन्दवाक्यमेवाह । मा विहासि-

क्षतं क्षुण्णासुरगणैरगणैरिव किं यशः॥ ८॥

पादान्तादियमकम्।

विवस्वदंशुसंश्लेषद्विगुणीकृततेजसः।
अमी वो मोघमुद्गूर्णा हसन्तीव महासयः॥ ९॥

वनेऽवने वनसदां मार्गं मार्गमुपेयुषाम्।
बाणैर्बाणैः समासक्तं शङ्केऽशं केन शाम्यति॥१०॥

पादादियमकम्।

…त्यादिना। रन्तव्यं रमणं क्रीड़ा। बहुलग्रहणात् भावे तव्यप्रत्ययः। संयत् युद्धम्। "समुदायः स्त्रियः संयत्समित्याजिसमिद्युधः" इत्यमरः। समे रन्तव्यसंयतो येषां ते समरन्तव्यसंयतः तुल्यक्रीड़ासङ्गरा इति तेषां सम्बोधनम्। यूयं समरं संग्रामं मा विहासिष्ट न त्यजत। जहातेर्माङि लुङ् मध्यमबहुवचनम्। क्षुण्णाः पराजिता असुरगणाः यैः तैः भवद्भिः इति शेषः। अगणैः इव गणेभ्योऽन्यैः इव किं किमर्थं यशः क्षतं नाशितं न एतद्युक्तं महाशूराणां भवादृशानाम् इत्यर्थः॥८॥

विवस्वदिति। विवस्वदंशुसंश्लेषेण सूर्य्यकिरणसम्पर्केण द्विगुणीकृतानि तेजांसि येषां ते तथोक्ताः मोघं व्यर्थं उद्गूर्णाः उद्यताः। "गुरी उद्यमने" इति धातोः कर्मणि क्तः। वो युष्माकममी महासयः खड्गाः हसन्तीव इत्युत्प्रेक्षा। किं पलायमानानां खड्गैरिति हासः॥९॥

वन इति। वनसदां वनेचराणाम् अवने रक्षके वने मार्गं मृगसम्बन्धिनं मार्गं पन्थानम् उपेयुषां पलायमानानाम् इत्यर्थः। युष्माकम् इति शेषः। वाणो ध्वनिः एषाम् अस्तीति …ः बाणैः ध्वनियुक्तैः। "वण संशब्दने" इति धातोर्घञ् ततो

पातितोत्तुङ्गमाहात्म्यैः संहृतायतकीर्त्तिभिः।
गुर्वीं कामापदं हन्तुं कृतमावृत्तिसाहसम् ॥११॥

गोमूत्रिकाबन्धः।

नासुरोऽयं न वा नागो धरसंस्थो न राक्षसः।
ना सुखोऽयं न वाभोगो धरणिस्थो हि राजसः॥१२

"अर्श आदिभ्यः" इत्यच्प्रत्ययः। यमकत्वात् बवयोरभेदः। उक्तञ्च—"रलयोर्डलयोस्तद्वज्जययोर्बवयोरपि। शसयोर्मनयोश्चान्ते सविसर्गाविसर्गयोः। सविन्दुकाविन्दुकयोः स्यादभेदेन कल्पनम्" इति। बाणैः शरैः समासक्तं समाश्लिष्टम् अशं दुःखं तत् केन शाम्यतीति शङ्के केन उपायेन शाम्येदिति विचारयामि इत्यर्थः॥१०॥

पातितेति। पातितम् उत्तुङ्गमाहात्म्यम् उन्नतभावो यैः तैः संहृताः आहृता आयताः विस्तृताः कीर्त्तयो यैः तैः युष्माभिः इति शेषः। कां गुर्वीम् आपदं हन्तुं न काञ्चिदपि इत्यर्थः। आवृत्तिः युद्धान्निवृत्तिः सैव साहसं कृतम् अतः पापात् अन्यन्न किञ्चित् फलम् अस्तीति भावः। तदुक्तं मनुना—"यस्तु भीतः परावृत्तः संग्रामे हन्यते परैः। भर्त्तुर्यद्दुष्कृतं किञ्चित् तत्सर्वं प्रतिपद्यते। यच्चास्य सुकृतं किञ्चिदमुत्रार्थमुपार्जितम्। भर्त्ता तत्सर्वमादत्ते परावृत्तहतस्य तु" इति॥११॥

नेति। किञ्च अयम् असुरो दैत्यो न। नागो गजो वा पन्नगश्च न। धरसंस्थः पर्वताकारः। "अहार्य्यधरपर्वताः" इत्यमरः। "संस्था व्यवस्था प्रणिधिस्थितिसाकारमृत्युषु" इति वैजयन्ती। राक्षसो न। किन्त्वयं सुखयतीति सुखः। सुखसाध्य इत्यर्थः। नवाभोगोऽभिनवप्रयत्नो महोत्साह इत्यर्थः।"आभोगो

मन्दमस्यन्निषुलतां घृणया मुनिरेष वः।
प्रणुदत्यागतावज्ञं जघनेषु पशूनिव॥ १३॥

न नोननुन्नो नुन्नोनो नाना नानानना ननु।
नुन्नोऽनुन्नो ननुन्नेनो नानेना नुन्ननुन्ननुत्॥१४॥

एकाक्षरः।

वरुणच्छत्रे पूर्णतायत्नयोरपि" इति विश्वः। धरणिस्थो भूतलचारी राजसो रजोगुणप्रधानो ना पुरुषो हि कश्चित् मानुष इत्यर्थः।"पुरुषाः पूरुषा नरः। मनुष्या मानुषा मर्त्या मनुजा मानवा नराः" इत्यमरः। अतो न पलायनमुचितमिति भावः। गोमूत्रिकाबन्धः। "वर्णानामेकरूपत्वं यद्येकान्तरमर्द्धयोः। गोमूत्रिकेति तत्प्राहु दुष्करं तद्विदो विदुः" इति लक्षणात्। षोड़शकोष्ठद्वये अर्द्धद्वयं क्रमेण विलिख्य एकान्तरविनिमयेन वाचने श्लोकनिष्पत्तिः इति उद्धारः॥१२॥

मन्दमिति। एष मुनिः घृणया कृपया इषुं लतां शाखाम् इव मन्दमस्यन् क्षिपन् वो युष्मान् पशून् इव आगतावज्ञं यथा तथा जघनेषु प्रणुदति चोदयति किमतः परं कष्टम्? इति भावः॥१३॥

नेति। पदच्छेदस्तावत्। न ना ऊननुन्न नुन्नोनः ना अना नानाननाः ननु। नुन्नः अनुन्नः ननुन्नेनः ना अनेनाः नुन्ननुन्ननुत्। अथ योजना। हे नानाननाः! नानाप्रकाराणि आननानि येषां ते नानाविधास्या इत्यर्थः। ऊनेन निकृष्टेन नुन्नो विद्ध ऊननुन्नो यः स ना न पुरुषो न। तथा नुन्न ऊनो येन स नुन्नोनो ना पुरुषोऽना ननु अपुरुषः खलु। ऊनाद्भीतः पलायमानस्तु किं वक्तव्यम् इति भावः। किञ्च नुन्नः इनः

वरं कृतध्वस्तगुणादत्यन्तमगुणः पुमान्।
प्रकृत्या ह्यमणिः श्रेयान् नालङ्कारश्च्युतोपलः॥१५॥
स्यन्दना नो चतुरगाः सुरेभा वाविपत्तयः।
स्यन्दना नो च तुरगाः सुरेभावा विपत्तयः॥१६॥

समुद्गकः।

स्वामो यस्य स नुन्नेनः स न भवतीति ननुन्नेनः। नञर्थस्य नशब्दस्य सुप्सुपेति समासः। स नुन्नो विद्धोऽप्यनुन्नोऽविद्ध एव यूयमनुन्नस्वामिकत्वादनुन्ना एवेति भावः। तथा नुन्ननुन्न-नुदतिशयेन नुन्नान्नुन्ननुन्नान् नुदतीति नुन्ननुन्ननुत् अतिपीडित-पीडकः ना पुरुषः अनेनाः निर्दोषो न भवतीति किन्तु सदोष एवेति "नार्त्तं नातिपरिक्षतम्" इति निषेधादित्यर्थः। अयन्तु नैतादृश इति न पलायितव्यमिति भावः। अयमेकव्यञ्जनः अन्त्यस्तकारस्तु न दोषावहः। "नान्त्यवर्णस्तु भेदकः" इति अभ्यनुज्ञानात्॥१४॥

वरमिति। कृताः पूर्वम् उत्पादिताः पश्चात् ध्वस्ता नष्टाः ते कृतध्वस्ताः। "पूर्वकाल" इत्यादिना समासः। कृतध्वस्ताः गुणाः यस्य तस्मात् पुंसोऽत्यन्तम् अतिशयेन अगुणो निर्गुणः पुमान् वरं मनाक्प्रियः किञ्चित्प्रिय इत्यर्थः। "वरं क्लीवे मनाक्प्रिये" इत्यमरः। तथाहि प्रकृत्या स्वभावेन अमणिः मणिरहितोऽलङ्कारः श्रेयान्। च्युतोपलो भ्रष्टरत्नो न श्रेयान्। "उपलः प्रस्तरे रत्ने" इति विश्वः। पलायितुः समरात् अगमनमेव वरमिति भावः। अत्र समानविषयारोपयोः प्रतिविम्ब-करणात् दृष्टान्तालङ्कारः॥१५॥

स्यन्दना इति। स्यन्दन्ते प्रद्रवन्तीति स्यन्दनाः जवनाः

भवद्भिरधुनारातिपरिहापितपौरुषैः ।
ह्रदैरिवार्कनिष्पीतैः प्राप्तः पङ्को दुरुत्तरः ॥१७॥
वेत्रशाककुजे शैलेऽलेशैजेऽकुकशात्रवे ।
यात किं विदिशो जेतुं तुञ्जेशोऽदिवि किं तया॥१८॥

प्रतिलोमानुलोमपादः ।

स्यन्दनाः रथा नो सन्ति । नन्द्यादित्वात् ल्युः । चतुरं गच्छन्तीति चतुरगाः तुरगाश्च अश्वा नो सन्ति । सुरभाः शोभनबृंहणाः सुरेभा वा सुरगजाश्च नो सन्ति । अविपत्तयो विपत्तिरहिताः विपत्तयो वा विशिष्टाः पदातयो नो सन्ति । अतो न भेतव्यम् इति भावः । अत्र पूर्वोत्तरार्द्धगतानां विशेषणानां च उद्देशोद्देश्यीभूतानां यथासंख्यसम्बन्धानुक्रमाद्यथासंख्यालङ्कारो यमकेन संसृष्टः ॥ १६ ॥

भवद्भिरिति । अधुना अरातिभिः परिहापितानि त्याजितानि पौरुषाणि यैः तैः भवद्भिः अर्कनिष्पीतैः अर्केण संशोषितैः ह्रदैः इव दुरुत्तरो दुस्तरः पङ्क इव दुष्कीर्त्तिः प्राप्तः ॥ १७ ॥

वेत्रेति । वेत्राणि वंशाः फलिन्यो वा शाकाः वर्वराश्च कुजा वृक्षा यस्मिन् तस्मिन् वेत्रशाककुजे अत एव दुःप्रवेश्ये इत्यर्थः । "वेत्रं वंशफलिन्योश्च" इति विश्वः । "शाकवर्वरवर्धकाः" इत्यमरः । लेशेन स्तोकेन अपि एजते कम्पते इति लेशैजः स न भवतीति अलेशैजः तस्मिन् । अत्यन्ताकम्पने इत्यर्थः । "एजृ कम्पने" पचाद्यच् । न कोकते नादत्ते इति अकुको ग्रहणासमर्थः शात्रवो यस्मिन् तस्मिन् अकुकशात्रवे । "कुक आदाने" पचाद्यच् । शैले पर्वते । केषां भावः किन्ता कुत्सितता तया उपलक्षिताः सन्तः । "कुत्सानिन्दावितर्केषु क्षेपे किं शब्द

अयं वः क्लैव्यमापन्नान् दृष्टपृष्ठानरातिना ।
इच्छतीशश्च्युताचारान् दारानिव निगोपितुम् ॥१९

ननु हो मथना राघो घोरा नाथमहो नु न ।
तयदातवदा भीमा माभीदा वत दायत ॥२०॥

प्रतिलोमानुलोमार्द्धः ।

इष्यते" इति शाश्वतः। विदिशो जेतुं यात गच्छत किम् ? यातेः सम्प्रश्ने लोट्। मध्यमपुरुषबहुवचनम्। दिवि स्वर्गेऽपि तुञ्जेश इति तेषां सम्बोधनम्। तुञ्जन्त इति तुञ्जाः दैत्याः "तुजि हिंसायाम्" पचाद्यच्। तेभ्यो दैत्येभ्य ईशत इति तुञ्जेशः ईशे क्विप्। तेभ्योऽपि शक्ता इत्यर्थः। स्वर्गेऽपि असुरविजयिनां युष्माकम् अत्र क्षुद्रस्थले क्षुद्रशत्रौ पलायनम् अनुचितम् इति भावः॥ १८ ॥

अथेशे तिष्ठति पलायनमेतद् वो न युक्तम् इत्याह। अयमिति। अयम् ईशः स्वामी शिवः क्लैव्यं निष्पौरुषत्वम् आपन्नान् प्राप्तान् तथा अरातिना दृष्टपृष्ठान् पलायमानान् इत्यर्थः वो युष्मान् च्युताचारान् स्खलितव्रतान् दारान् कलत्राणि इव। "अथ पुंभूम्नि दाराः" इत्यमरः। निगोपितुं गोप्तुम्। ऊदित्त्वादिड् विकल्पः। दारदोषं भर्त्तेव स्वमहिम्ना युष्मद्दोषं संवरितुम् इच्छति। अतः कुतो युष्माकम् अनर्थः ? इत्यर्थः॥ १९ ॥

नन्विति। ननु इति आमन्त्रणे। हो इति आह्वाने। "हे है व्यस्तौ समस्तौ च हतिसम्बोधनार्थयोः। हो ह्रौ चैवंविधौ च यौ सम्बुद्ध्याह्वानयोरपि" इति विश्वः। मथ्नन्तीति मथनाः "मन्थ विलोड़ने" कर्त्तरि ल्युट्। राघन्ति समर्था भवन्तीति राघः। "राघृ सामर्थ्ये" क्विप्। घोराः क्रूराः शत्रूणाम् इति

किं त्यक्तापास्तदेवत्वमानुष्यकपरिग्रहैः।
ज्वलितान्यगुणैर्गुर्वी स्थिता तेजसि मानिता॥२१॥
निशितासिरतोऽभीको न्येजतेऽमरणा रुचा।
सारतो न विरोधी नः स्वाभासो भरवानुत॥२२॥

भावः। नाथं महयन्ति पूजयन्तीति नाथमहः। दृशिग्रहणात् कर्म्मणि उपपदे क्विप्। नयन्ति रक्षन्तीति नयाः रक्षकाः। पचाद्यच्। दायन्तीति दाताः शुद्धाः। "दैप् शोधने" कर्त्तरि क्तः। वदन्तीति वदाः वक्तारः। पचाद्यच्। तेषां द्वन्द्वः नयदातवदाः भीमा भयङ्कराः माभीः। नञर्थमाशब्दस्य सुप्सुपेति समासः। तान् ददतीति माभीदाः अभयप्रदाः एवंविधा यूयमिति शेषः। वत इति खेदे बवयोरभेदः। न दायत नु? न शुद्धाः किम्? नु पृच्छायाम्। किन्तु शुद्धा एव न काकुः अत्रानुसन्धेयः। "दैप् शोधने" लोट् मध्यमपुरुषबहुवचनम्॥२०॥

किमिति। अपास्तोऽवधीरितो देवत्वमानुष्यकयोः परिग्रहः स्वीकारो यैः तैः अतिदेवमानुषैः इत्यर्थः। मनुष्याणां भावो मानुष्यकम्। योपधात् गुरूपोत्तमाद्वुञ्। ज्वलितानि अगुणैः ज्वलिताः प्रकाशिता इति यावत् अन्यगुणा असदृशगुणा यैः तैः "अन्यौ विभिन्नासदृशौ" इति वैजयन्ती। ईदृशैः भवद्भिरिति शेषः। तेजसि प्रतापे स्थिता प्रतापैकशरणा मानिता शूरत्वाभिमानिता किमिति त्यक्ता। किमिति निर्लज्जैः पलायते इति भावः॥२१॥

निशितेति। हे अमरणा मरणरहिता निशितासिरतोऽतितीक्ष्णखड्गरतोऽभीको निर्भीको रुचा तेजसा उपलक्षितः सुष्ठु आभासत इति स्वाभासो रमणीयः। पचाद्यच्। उत अत्यर्थम् अतिशयेन भरवान्। रणभरसहिष्णुः इत्यर्थः। उता-

तनुवारभसो भास्वानधीरो विनतोरसा ।
चारुणा रमते जन्ये कोऽभीतो रसिताशिनि॥२३॥
प्रतिलोमानुलोमेन श्लोकद्वयम् ।

त्यर्थविकल्पयोः" इति विश्वः । ईदृशो नोऽस्माकं विरोधी शत्रुः सारतो बलतो न न्येजते न कम्पते न प्रचलतोत्यर्थः । "एजृ कम्पने" लट् । अतो भवद्भिः अपि व्यातव्यम् एव न चलितव्यम् इति भावः । एतन्मते "विरोधी नः" इत्यत्र सविसर्गपाठः । प्रतिलोमे निर्विसर्गपाठे "पदान्ते सविसर्गाविमर्गयोः" इत्येतादृशकाव्ये एक्यस्वीकारात् । अन्ये तु इनः सूर्य इव स्वाभाम इनस्वाभाम इत्येकं पदम् आहुः । केचित्तु विरोधी शत्रुः पूर्वविशेषणविशिष्टो न, अपि तु पूर्वविशेषणविशिष्ट एवेति काक्वर्थेन नकारमाहुः । परे तु सारता न विरोधी न । न रतम् अरतम् अरतेन सह वर्त्तमानाः सारता मुनयः तान् ऊनयन्ति मारणेन न्यूनान् कुर्वन्तीति सारतोना दैत्यास्तेषां विरोधी विष्णुः स नावं नायम् । अतः कथं पलायन्ते । न स्वाभामः । स्वेन धनेन भामत इति स्वाभामः कुवेरः सोऽपि नायम् । न भरवान् भं नक्षत्रं राति । आतोऽनुपसर्गे कः । भरश्चन्द्रस्तद्वान् शिवोऽपि न अतः पलायनं न उचितमित्याहुः इत्युपरिष्टात् ॥ २२ ॥

ननु अयं न चलतीति कथं ज्ञायते ? तत्राह । तन्विति । तनुमावृणोति आच्छादयति इति तनुवारं वर्म । कर्मण्यण् । तेन वभस्ति भासते इति अनुवारभसः । "भस दीप्तौ" पचाद्यच् । भास्वान् तेजस्वी चारुणा भास्वता विनतेन उन्नतेन उरसा वक्षःस्थलेन उपलक्षितः । एवंविधोऽपि अधीरो धैर्यरहितः रसितेन शब्दितेनैव अश्नाति ग्रसति इति रसिताशी

विभिन्नपातिताश्वीयनिरुद्धरथवर्त्मनि ।
हतद्विपनगष्ठ्यूतरुधिराम्बुनदाकुले ॥ २४ ॥

दे वा का नि नि का वा दे
वा हिं का स्व स्व का हि वा ।
का का रे भ भ रे का का
नि स्व भ व्य व्य भ स्व नि ॥ २५ ॥

इति सर्वतोभद्रः ।

तस्मिन् । रवेण एव विश्वप्राणहारिणीत्यर्थः । आभीक्ष्ण्ये णिनिः । जन्ये युद्धे "युद्धमायोधनं जन्यम्" इत्यमरः । अभीतः निर्भीकः सन् को रमते कः क्रीड़ति निर्भयसञ्चारात् एव अस्य निश्चलत्वं निश्चीयत इत्यर्थः । पूर्वश्लोकस्य अयं प्रतिलोमः ॥२३॥

अथ पञ्चभिः कुलकमाह । विभिन्नेत्यादिभिः । आहवं विशिनष्टि । विभिन्नानि विदारितानि अत एव पातितानि आश्वीया अश्वसमूहाश्च ते तथा । "पूर्वकाल" इति समासः । तैः अश्वसमूहैः निरुद्धानि रथानां वर्त्मानि यस्मिन् तथोक्ते । "वृन्दे त्वाश्वीयमाश्ववत्" इत्यमरः । "केशाश्वाभ्यां यञ्छावन्यतरस्याम्" इति छप्रत्ययः । हतास्ताड़िता द्विपा गजा एव नगाः शैलाः । "शैलवृक्षौ नगावगौ" इत्यमरः । तैः ष्ठ्यूतानि उज्झितानि । ष्ठिवतेः कर्मणि क्तः । "च्छ्वोः शूड़नुनासिके च" इति ऊठादेशः । तानि रुधिराण्येव अम्बूनि तेषां नदैः प्रवाहैः आकुले व्याप्ते ॥ २४ ॥

देवेति । पुनश्च देवान् आकनयति उद्दीपयति उत्साहयति इति देवाकानी तस्मिन् देवाकानिनि । "कन दीप्तौ" इति धातोर्ण्यन्तात् णिनिः । यद्वा "कै शब्दे" इति धातोराङ्पूर्वस्य

प्रनृत्तशवविलस्ततुरगाक्षिप्तसारथौ।
मारुतापूर्णतूणीरविक्रुष्टहतसादिनि॥ २६॥

भावे ल्युटि आक्रानम् आशब्दनम् ईषद्दनम् इति यावत् दवानां तद्दतीत्यर्थः। कावादः ईषद्वादो वाक्कलहः। "ईषदर्थे" इति कुशब्दस्य कादेशः। तद्वति कावादे। "अर्श आदिभ्योऽच्" वाहिकापर्य्यायेण रणभारोद्वहनम्। वहेः पर्य्याये धात्वर्थ-निर्देशे ण्वुल् वक्तव्यः। वाहिकया क्रमप्राप्तरणक्रियया सुष्टु शोभनं यथा तथा अश्वकान् परानाजिहीते अभियुङ्क्ते योजयतीति यावत् वाहिकाश्वकाहाः तस्मिन्। योद्धृधर्म्मो युद्ध उपचर्य्यते। "ओहाङ् गतौ" इति धातोः विच्प्रत्ययः। सोमपाशब्दवत् प्रक्रिया। वाशब्दश्चार्थे। कं मदोदकमाकिरन्ति इति काकाराः मदस्राविणः। किरतेराङ्पूर्वात् कर्मण्यण्। एवंविधा इभभरा गजघटा यत्र यस्मिन् काकारेभभरे। काका इव काकाः गर्ह्या इति लक्षणया तेषाम् आमन्त्रणम। निस्वाः निरुत्साहाः भव्याः सोत्साहाः तान्भयान् व्ययन्ति संवृण्वन्ति इति निस्वभव्यव्याः। "व्येञ् संवरणे।" "आतोऽनुपसर्गे कः"। ते वभस्ति भासते इति निस्वभव्यव्यभस्वान् तस्मिन्। "अन्येभ्योऽपि दृश्यते" इति क्वनिप्। सर्वतोभद्रम्। सर्वतो भ्रमणात् सर्वतो भद्राख्यश्चित्रबन्धः। यथाह दण्डी। "तदिदं सर्वतोभद्रं भ्रमणं यदि सर्वतः" इति। उद्धारस्तु। "अष्टकोष्ठचतुष्टयं लिखित्वा तत्र श्लोकं क्रमेण लिखित्वा सर्वतो वाचनात् सर्वतोभद्रः" इति॥ २५॥

प्रनृत्तेति। प्रनृत्तशवेभ्यो नृत्यत्कबन्धेभ्यो वित्रस्तैः क्षुभितैः तुरगैः आक्षिप्ता अवधूताः सारथयो यत्र तस्मिन्। तथा मारुतेन आपूर्णैः व्याप्तैः तूणीरैः निषङ्गैः विक्रुष्टाः शब्दायमानाः

स स त्व र ति दे नि त्यं

स द रा म र्ष ना शि नि ।

त्व रा धि क क सं ना दे

र म क त्व म क र्ष ति ॥ २७ ॥

इति अर्द्धभ्रमकः ।

आसुरे लोकविचासविधायिनि महाहवे ।

युष्माभिरुन्नतिं नीतं निरस्तमिह पौरुषम् ॥२८॥

कुलकम् ।

इति शासति सेनान्यां गच्छतस्ताननेकधा ।

हताः ताडिताः सादिनस्तौरङ्गिका यत्र तस्मिन् यद्वा मारुता-पूर्णतूणीरैः विकृष्टा आकर्षिता अत एव हता मारिताः सादिनोऽश्ववारा यत्र तस्मिन् ॥ २६ ॥

ससत्वेति । ससत्त्वानां सत्त्ववतां रतिदे रागप्रदे नित्य-मदराणां मभयानाम् अमर्षनाशिनि क्रोधहारिणि त्वरया उत्सा-हेन अधिकं कसन्तो विकसन्तो नादाः यत्र तस्मिन् रमयति इति रमकः । रमधातोः वुञ् । तस्याकादेशः तद्भावो रमकत्वम् । रणकर्मणा परस्ञकत्वं अकर्षति अपनुदति वीराणां परस्परम् उत्साहं रणकर्मणा स्फोरयति इत्यर्थः ॥ २७ ॥

आसुर इति । एवंविधे आसुरे असुरसम्बन्धिनि लोक-विलासविधायिनि लोकभयङ्करे महाहवे महायुद्धे युष्माभिः उन्नतिं वृद्धिं नीतं प्रापितं पौरुषं पुरुषकर्म निरस्तं नाशितम् इह संग्रामे ॥ २८ ॥

इतीति । इतीत्थं सेनान्यां स्कन्दे शासति आज्ञापयति

निषिध्य हसता किञ्चित् तस्थे तत्रान्धकारिणा॥२९

निरौष्ठ्यम्।

मुनीषुदहनातप्तान् लज्जया निविवृत्सतः।
शिवः प्रह्लादयामास तान्निषेधहिमाम्बुना ॥३०॥

दूनास्तेऽरिबलादूना निरेभा बहु मेनिरे।
भीताः शितशराभीताः शङ्करं तत्र शङ्करम् ॥३१॥

पादाद्यन्तयमकम्।

महेषुजलधौ शत्रोर्वर्त्तमाना दुरुत्तरे।

अनेकधा गच्छतः पलायमानान् तान् गणान् निषिध्य निवार्य्य अन्धकारिणा हरेण किञ्चित् हसता तस्थे स्थितम्। भावे लिट्॥ २९॥

मुनीति। मुनेरिषव एव दहनस्तेन आतप्तान् पीड़ितान् तथा लज्जया रणभङ्गात् शालीनत्वेन निविवृत्सतो निवर्त्तितुकामान्। "वृद्भ्यः स्यसनोः" इति विकल्पात् परस्मैपदम्। तान् गणान् शिवः निषेधः मा भैष्ट मा पलायतेति निवारणवचनं स एव हिमाम्बु शीतोदकं तेन प्रह्लादयामास। रूपकालङ्कारः॥ ३०॥

दूना इति। दूनाः शरतप्ताः। "ल्वादिभ्यः" इति निष्ठानत्वम्। अरिबलात् शत्रुबलात् ऊनाः ऊनबलाः। "पञ्चमी-विभक्ते" इति पञ्चमी। निरेभाः निःशब्दाः। कुतः भीताः त्रस्ताः कुतः यतः शितैः तीक्ष्णैः शरैः अभीताः अभिव्याप्ताः। इणः कर्मणि क्तः। ते गणाः तत्र रणे शङ्करम् अभयवचनेन सुखकरं शङ्करं शिवं बहु यथा तथा मेनिरे अमन्यन्त॥ ३१॥

महेष्विति। दुरुत्तरे दुस्तरे शत्रोः सम्बन्धिनि महेषुजलधौ

प्राप्य पारमिवेशानमाशश्वास पताकिनी ॥३२॥
स बभार रणापेतां चमूं पश्चादवस्थिताम् ।
पुरः सूर्य्यादुपावृत्तां छायामिव महातरुः ॥३३॥
मुञ्चतीशे शरान् जिष्णौ पिनाकस्वनपूरितः ।
दध्वान ध्वनयन्नाशाः स्फुटन्निव धराधरः ॥३४॥
तद्गणा ददृशुर्भीमं चित्रसंस्था इवाचलाः ।
विस्मयेन तयोर्युद्धं चित्रसंस्था इवाचलाः ॥३५॥

द्विचतुर्थयमकम् ।

महति बाणसागरे वर्त्तमाना पताकिनी सेना ईशानं शिवं पारं परतीरम् इव । "पारावारे परार्वाचो" इत्यमरः । प्राप्य आशश्वास प्राणिति स्म ॥ ३२ ॥

स इति । स शिवो रणापेतां रणादपवृत्तां पराङ्मुखीभूताम् अत एव पश्चात् पृष्ठभागे अवस्थितां चमूं पुरोऽग्रे स्थितः सूर्य्यः सूर्य्यकिरणः तस्मात् अपावृत्तां परावृत्तां छायां महातरुः इव बभार । छायां तरुरिव आत्मैकशरणां तां चमूं न मुमोच इत्यर्थः ॥ ३३ ॥

मुञ्चतीति । ईशे हरे कर्त्तरि जिष्णौ अर्जुने विषये शरान् मुञ्चति सति पिनाकस्य शिवकार्मुकस्य स्वनेन ध्वनिना पूरितः धराधरः इन्द्रकीलः स्फुटन्निव विदीर्य्यमाण इव इत्युत्प्रेक्षा । आशा दिशः ध्वनयन् शब्दयुक्ताः कुर्वन् दध्वान शब्दमकरोत् । "दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः" इत्यमरः ॥३४॥

तदिति । भीमं तयोः हरपाण्डवयोः तत् प्रसिद्धं युद्धं गणाः प्रमथाः चित्रसंस्थाः चित्राकाराः अचलाः शैला इव । तथा

परिमोहयमाणेन शिक्षालाघवलीलया।
जैष्णवी विशिखश्रेणी परिजह्रे पिनाकिना॥३६॥
अवद्यन् पत्रिणः शम्भोः सायकैरवसायकैः।
पाण्डवः परिचक्राम शिक्षया रणशिक्षया॥३७॥

आद्यन्तयमकम्।

चारचुञ्चुश्चिरारेची चञ्चच्चीररुचा रुचः।

चित्रे आलेख्ये संस्था स्थितिः येषां ते चित्रसंस्थाः चित्रलिखिता इव अचला आश्चर्यवशात् निश्चलाः सन्तो विस्मयेन ददृशुः॥३५॥

द्विचतुर्थयमकम्।

परीति। शिक्षालाघवलीलया अभ्यासपाटवातिशयेन हेतुना परिमोहयमाणेन व्यामोहयता। "अणावकर्मकाच्चित्तवत्कर्तृकात्" इति परस्मैपदे प्राप्ते 'न पादमि"इत्यादिना तत् प्रतिषेधात् आत्मनेपदं शानच्। "णेर्विभाषा" इति कृत्स्थस्य नस्य वा णत्वम्। पिनाकिना हरेण जिष्णोः अर्जुनस्य इयं जैष्णवी विशिखश्रेणी बाणसङ्घातः परिजह्रे निरस्ता॥३६॥

अवद्यन्निति। पाण्डवोऽर्जुनः अवसायकैः अवसानकरैः स्यतेर्ण्यन्तात् ण्वुल्प्रत्ययः। सायकैः बाणैः शम्भोः पत्रिणः शरान् अवद्यन् खण्डयन्। द्यतेः शतृप्रत्ययः। "ओतः श्यनि" इति ओकारलोपः। शिक्षया शक्तुं प्रभवितुमिच्छया उत्साहेन इत्यर्थः रणे शिक्षया अभ्यासेन च परिचक्राम। उत्साहनैपुण्याभ्यां चचार इत्यर्थः॥३७॥

चारेति। चारैः गतिविशेषैः वित्त इति चारचुञ्चुः। "तेन वित्तश्चुञ्चुप्चणपौ"इति चुञ्चुप्प्रत्ययः। चिरमारेचयति रिक्तीकरोति शत्रून् इति चिरारेची। चञ्चतः चलतश्चीरस्य वल्कलस्य

चचार रुचिरश्चारु चारैराचारचञ्चुरः ॥ ३८ ॥

इत्यचरः ।

स्फुरत्पिशङ्गमौर्वीकं धुनानः स बृहद्धनुः ।
धृतोल्कानलयोगेन तुल्यमंशुमता बभौ ॥ ३९ ॥

पार्थबाणाः पशुपतेरावव्रुर्विशिखावलीम् ।
पयोमुचा इवारब्धाः सावित्रीमंशुसंहतिम् ॥४०॥

शरवृष्टिं विधूयोर्वीमुदस्तां सव्यसाचिना ।
रुरोध मार्गणैर्मार्गं तपनस्य त्रिलोचनः ॥४१॥

रुचा प्रभया रोचते इति रुचः शोभमानः । "इगुपध" इति कः । रुचिरः सुन्दरः । चञ्चुर्यते भृशं चरतीति चञ्चुरः । चरतेर्यङन्तात् पचाद्यच् । "चरफलोश्च" इति नुमागमः । "यङोऽचि च" इति यङो लुक् । आचारस्य युद्धव्यवहारस्य चञ्चुरो भृशम् आचरितः स मुनिः चारु यथा तथा चारैः चक्रादिबन्धैः गतिविशेषैः चचार । "चारः पियालवृक्षे स्याद्गतौ बन्धापसर्पयोः" इति विश्वः ॥३८॥ इत्यचरः ।

स्फुरदिति । स मुनिः अर्जुनः स्फुरन्ती पिशङ्गी पिशङ्गवर्णा मौर्वी ज्या यस्य तत् तथोक्तम् । "नद्यृतश्च" इति कप् प्रत्ययः । बृहद्धनुः गाण्डीवं धुनानः कम्पयन् । उल्केव अनलः तेन धृतो योगो येन तेन अंशुमता अर्केण सूर्य्येण तुल्यं बभौ । उपमा ॥३९॥

पार्थेति । पार्थबाणाः अर्जुनशराः पशुपतेः विशिखावलीं शरसङ्घातं सवितुरियं सावित्री ताम् अंशुसंहतिं किरणसमूहम् अरब्धाः निविड़ाः पयोमुचः मेघा इव आवव्रुः तिरोदधुः॥४०॥

शरेति । त्रिलोचनः शिवः । सव्येन सचते समवैतीति तेन

तेन व्यातेनिरे भीमा भीमार्जनफलाननाः ।
न नानुकम्प्य विशिखाः शिखाधरजवाससः ॥४२॥

शृङ्खलायमकम् ।

द्युवियद्गामिनी तारसंरावविहतश्रुतिः ।
हैमीषुमाला शुशुभे विद्युतामिव संहतिः ॥४३॥

इति गूढचतुर्थपादः ।

सव्यसाचिना अर्जुनेन उदस्तां क्षिप्ताम् उर्वीं महतीं शरवृष्टिं मार्गणैः शरैः विधूय निरस्य तपनस्य मार्गं रुरोध आववे ॥४१॥

तेनेति । तेन शिवेन भीमाः भयङ्कराः भियो भयस्य मार्जनं निरासः तदेव फलं प्रयोजनं येषां तानि आननानि अग्राणि येषां ते भीमार्जनफलाननाः । तथा शिखाधराः मयूराः तेषु जातानि शिखाधरजानि बर्हाणि तानि वासांसि पत्रा येषां ते शिखाधरजवाससः मयूरपक्षिण इत्यर्थः। विशिखाः बाणा अनुकम्प्य कृपां कृत्वा न व्यातेनिरे इति न किन्तु अनुकम्प्यैव इत्यर्थः । अनुजिघृक्षुत्वात् इति भावः । सम्भाव्य निषेधने द्वौ प्रतिषेधौ इत्युक्तम् ॥४२॥ शृङ्खलायमकम् ।

द्युवियदिति । द्यां स्वर्गं वियदन्तरिक्षं च गच्छति इति द्युवियद्गामिनी तेन इव व्यापिनी । द्वितीयाप्रकरणे श्रितादिषु गम्यादीनाम् उपसङ्ख्यानात्समासः । तारेण उच्चैस्तरेण संरावेण विहताः ताडिता विद्धाः श्रुतयः कर्णा यया सा तथोक्ता । हैमी हेममयी इषुमाला शिवशरावलिः विद्युतां संहतिरिव उक्तविशेषणा विद्युन्माला इव शुशुभे । चतुर्थपादवर्णानां त्रिपाद्यां सम्भवात् गूढचतुर्थपादमाहुः ॥४३॥

विलङ्घ्य पत्रिणां पङ्क्तिं भिन्नः शिवशिलीमुखैः।
ज्यायो वीर्य्यमुपाश्रित्य न चकम्पे कपिध्वजः॥४४॥
जगतीशरणे युक्तो हरिकान्तः सुधासितः।
दानवर्षी कृताशंसो नागराज इवाबभौ॥ ४५॥

अर्थत्रयवाची।

विलङ्घ्येति। शिवशिलीमुखैः पत्रिणां पङ्क्तिं निजशरावलिं विलङ्घ्य अतिक्रम्य भिन्नो विद्धः कपिध्वजः ज्यायः प्रशस्तम्। "वृद्धप्रशस्तयोर्ज्यायान्" इत्यमरः। वीर्य्यं सत्त्वम् उपाश्रित्य अवस्थाय न चकम्पे न चचाल किन्तु तान् सहन् अवतस्थौ इत्यर्थः ॥४४॥

जगतीति। अर्थत्रयवाची श्लोकोऽयम्। तत्र आदौ अगराज इति पदच्छेदमाश्रित्य एकोऽर्थोऽभिधीयते। ईशस्य रणे युक्तः शक्तः अन्यत्र जगतीशरणे भूरक्षणे युक्तः स्थितः विधिना इति शेषः। हरिः सिंहः इव कान्तः मनोहरः अन्यत्र हरीणां सिंहानां कान्तः आवासदानात् प्रियः सुष्ठु दधाति पालयति प्रजा इति सुधा। विजन्तः। असितः कृष्णवर्णः ततो विशेषणसमासः। अन्यच्च सुधा लेपद्रव्यविशेषः तद्वत् सितो धवलः दानवर्षी बहुप्रदः कृताशंसः कृतजयाभिलाषः अन्यच्च दानवैः दैत्यैः ऋषिभिश्च कृता आशंसा नानाफलाभिलाषो यस्मिन् स ना नरोऽर्जुनः। अगराजः हिमवान् इव जगति आबभौ इति एकार्थः ॥४॥(१) अथ ऐरावतसाम्यमुच्यते। जगतीं भुवं श्यन्ति तनूकुर्वन्तीति ते जगतीशाः राक्षसाः तेषां रणः तत्र युक्तः विहितः समर्थः। हरिकान्तः इन्द्रप्रियः उभयत्रापि समानमेतत्। सुधासितः अमृतस्वच्छः एकत्र शीतलः अन्यत्र वर्णेन

विफलीकृतयत्नस्य क्षतबाणस्य शम्भुना ।
गाण्डीवधन्वनः खेभ्यो निश्चक्राम हुताशनः ॥४६॥

स पिशङ्गजटावलिः किरन्
उरु तेजः परमेण मन्युना ।
ज्वलितौषधिजातवेदसा
हिमशैलेन समं विदिद्युते ॥ ४७ ॥

इति विवेकः । दानवर्षी धनप्रदो मदस्रावी च कृताशंसः उभयत्र कृतजिगीषः पार्थः नागराज इव ऐरावत इव आबभौ इति द्वितीयोऽर्थः ॥*॥ (२) अथ शेषौपम्यमुच्यते । जगतीशरणे भूरक्षणे युक्तो नियुक्तः दैवैरिति शेषः । "शरणं गृहरक्षित्रोः" इत्यमरः । हरिकान्तः कृष्णप्रियः उभयत्रापि तुल्यम् । सुष्ठु दधातीति सुधा वसुधा इति केचित् एकदेशग्रहणात् समुदायग्रहणम् । तत्र सितो बद्धः । "षिञ बन्धने" क्तः । अन्यत्र सुधया अमृतेन सितो बद्धः अमृतप्रिय इत्यर्थः । दानवाः ऋषयश्च तैः कृताशंसो विहितप्रशंसः उभयत्रापि तुल्यमेतत् । सोऽर्जुनः नागराजः शेष इव आबभौ इति तृतीयोऽर्थः (३)॥४५

विफलीति । शम्भुना क्षतबाणस्य अत एव विफलीकृतयत्नस्य निष्फलप्रयत्नस्य गाण्डीवं धनुः यस्य तस्य गाण्डीवधन्वनोऽर्जुनस्य । "वा संज्ञायाम्" इत्यनङादेशः । खेभ्यः इन्द्रियरन्ध्रेभ्यः । "खमिन्द्रिये सुखे स्वर्गे" इति विश्वः । हुताशनोऽग्निः निश्चक्राम निष्क्रान्तः क्रोधादिति भावः ॥४६॥

स इति । पिशङ्गजटावलिः पिशङ्गजटाजूटः परमेण उत्कृष्टेन मन्युना क्रोधेन उरु महत्तेजः किरन् विक्षिपन् सोऽर्जुनः ज्वलिताः ओषधयः तृणज्योतींषि जातवेदाः दवाग्निश्च यस्मिन्

शतशो विशिखानवद्यते
भृशमस्मै रणवेगशालिने ।
प्रथयन्ननिवार्य्यवीर्य्यताम्
प्रजिघायेषु मघातुकं शिवः ॥ ४८ ॥

शम्भोर्धनुर्मण्डलतः प्रवृत्तं
तं मण्डलादंशुमिवांशुभर्त्तुः ।
निवारयिष्यन् विदधे सिताश्वः
शिलीमुखच्छायवृतां धरित्रीम् ॥ ४९ ॥

तेन हिमशैलेन समं तुल्यं हिमाद्रिरिव विदिद्युते हिमाद्रिवत् शुशुभे इति विम्बप्रतिविम्बभावोपमा ॥४७॥

शतश इति । शिवः शतशो विशिखानवद्यते खण्डयते रणवेगशालिने अस्मै पार्थाय भृशम् अनिवार्य्यवीर्य्यतां निजाम् इति शेषः । तस्मै प्रथयन् दर्शयन् । किन्तु अघातुकम् अमारकम् । "लषपत" इत्यादिना हन्तेरुकञ् । इषुं जातौ एकवचनम् प्रजिघाय प्रयुयुजे । "हि गतौ" इति धातोर्लिट् । "हेरचङि" इति कुत्वम् ॥४८॥

शम्भोरिति । सिताश्वोऽर्जुनः शम्भोः धनुर्मण्डलतः धनुर्मण्डलात् प्रवृत्तं निष्क्रान्तं तम् इषुम् अंशुभर्त्तुः अर्कस्य मण्डलात् प्रवृत्तम् अंशुम् इव अत्रापि इषुवज्जातौ एकवचनम् । निवारयिष्यन् निवारयितुकामः । क्रियार्थक्रियायां लृटि तस्य शत्रादेशः । धरित्रीं भुवं शिलीमुखानां छाया शिलीमुखच्छायम् । "छाया बाहुल्ये इति नपुंसकत्वम् । तेन वृतां व्याप्तां विदधे कृतवान् । शरजालच्छायावृतां धरित्रीम् अकरोत् इत्यर्थः ॥४९॥

घनं विदार्य्यार्जुनबाणपूगं
ससारबाणोऽयुगलोचनस्य।
घनं विदार्य्यार्जुनबाणपूगं
ससार बाणोऽयुगलोचनस्य॥५०॥ मद्दावलिः।
रुजन्महेषून् बहुधाशुपातिनो
मुहुः शरौघैरपवारयन् दिशः।
चलाचलोऽनेक इव क्रियावशात्
महर्षिसङ्घैर्बुबुधे धनञ्जयः॥ ५१ ॥

घनमिति। अयुगलोचनस्य विषमनेत्रस्य ईशस्य अलो-चनस्य। लोच्यतेऽसौ लोचनः। कर्मणि ल्युट्। न लोचनः अलो-चनः तस्य अलोचनस्य अचाक्षुषज्ञानविषयस्य सम्बन्धी सारो बलं बाणः शब्दः ताभ्यां सारबाणाभ्यां स्थिरशब्दाभ्यां सह वर्त्तते इति ससारबाणः बवयोरभेद इत्युक्तम्। न युज्यते कुत्रापीति अयुक् सङ्गरहितः। क्विप्। बाणः शरः जातौ एकवचनम्। घनं सान्द्रम् अर्जुनस्य बाणपूगं शरव्रातं विदार्य्य विभिद्य घनं निविड़म् विदार्य्या भूमिकूष्माण्ड्यो लताविशेषाः अर्जुनाः ककुभवृक्षा बाणा नीलसैरेयकाः पूगाः क्रमुकाः तेषाम्। "विभाषा वृक्ष" इत्यादिना द्वन्द्वैकवद्भावः। विदार्य्य अर्जुन-बाणपूगं ससार निविवेश इत्यर्थः। यद्वा तदानीमेव युगलोच-नस्य अर्जुनस्य बाणः ससार इत्यर्थः॥ ५०॥

रुजन्नित्यादि। बहुधा आशुपातिनः शीघ्रम् आपततो महेषून् मुहुः शरौघैः रुजन् भञ्जयन्। तथा दिशश्चापवारयन् आच्छादयन् क्रियावशात् युद्धकर्मायत्ततया चलाचलोऽति-

विकाशमीयुर्जगतीशमार्गणा
विकाशमीयुर्जगतीशमार्गणाः ।
विकाशमीयुर्जगतीशमार्गणा
विकाशमीयुर्जगतीशमार्गणा ॥ ५२ ॥

महायमकम् ।

सम्पश्यतामिति शिवेन वितायमानं
लक्ष्मीवतः क्षितिपतेस्तनयस्य वीर्य्यम् ।

चञ्चलो धनञ्जयो महर्षिसङ्घैः अनेका बहुविध इव बुबुधे दृष्टश्च ॥ ५१ ॥

विकाशमिति । जगतीशस्य अर्जुनस्य मार्गणा बाणाः विकाशं प्रसारमीयुः तथा जगति लोके ईशमार्गणाः शम्भुशराः विकाशं विषमगतिमीयुः प्रापुः इत्यर्थः । तथा जगतीं पृथ्वीं श्यन्ति तनूकुर्वन्तीति जगतीशाः दानवाः । "आतोऽनुपसर्गे कः" तान् मारयन्तीति जगतीशमाराः । क्विप् । ते च ते गणाश्च जगतीशमार्गणाः प्रमथा विकाशम् उल्लासं हर्षमीयुः प्रापुः इत्यर्थः । अहो देवेऽपि अस्य पराक्रमप्रसर इति विस्मयात् इति भावः । तदानीं मार्गयन्तीति मार्गणाः अन्वेषणाः । कर्त्तरि ल्युट् । जगतीशस्य मार्गणाः अन्वेषकाः शिवद्रष्टारो देवर्ष्यादयो वीनां पक्षिणां काशो गतिः अत्र इति विकाशम् आकाशमीयुः दिदृक्षया इति भावः ॥ ५२ ॥ महायमकम् ।

सम्पश्यतामिति । इतीत्थं शिवेन वितायमानं विस्तार्य्यमाणम् । "वनोतेर्यकि" वैकल्पिक आकारादेशः । लक्ष्मीवतो जयश्रीमतः । "मादुपधायाः" इत्यादिना मतुपो मस्य वकारः । क्षितिपतेः तनयस्य अर्जुनस्य वीर्य्यं शौर्य्यं सम्पश्यतां तत्त्वविदाम्

अङ्गान्यभिन्नमपि तत्त्वविदां मुनीनां
रोमाञ्चमञ्चिततरं विभराम्बभूवुः ॥ ५३ ॥
इति युद्धवर्णनं नाम पञ्चदशः सर्गः ॥ १५ ॥

---

## षोड़शः सर्गः ।

ततः किराताधिपतेरलघ्वीम्
आजिक्रियां वीक्ष्य विवृद्धमन्युः
स तर्कयामास विविक्ततर्कः
चिरं विचिन्वन्निति कारणानि ॥ १ ॥

अपि हरेः अंशावतारोऽयमिति विदुषाम् अपि किमुत अन्येषाम् ? इति भावः। मुनीनाम् अङ्गानि गात्राणि अभिन्नम् अविरलम् अञ्चिततरम् अतिरुचिरतर रोमाञ्चं रोमहर्षं विभराम्बभूवुः बभ्रुः। "भीह्री" इत्यादिना विकल्पादाम्प्रत्ययः ॥५३॥
इति किरातार्जुनीये पञ्चदशसर्गव्याख्या समाप्ता।

---

तत इति। ततोऽनन्तरं किराताधिपतेः सम्बन्धिनीम् अलघ्वीं गुर्वीम् आजिक्रियां रणकर्म वीक्ष्य विवृद्धमन्युः विवृद्धकोपः विविक्तः निष्कलङ्कः तर्कः ऊहो ज्ञानं वा यस्य सोऽर्जुनः कारणानि रणभराशक्तिकारणानि विचिन्वन् विमृशन्। इतीत्थं वक्ष्यमाणम् एव तर्कयामास अभ्यूहितवान् ॥१॥

मदस्रुतिश्यामितगण्डलेखाः
क्रामन्ति विक्रान्तनराधिरूढाः ।
सहिष्णवो नेह युधामभिज्ञा
नागा नगोच्छ्रायमिवाक्षिपन्तः ॥ २ ॥

विचित्रया चित्रयतेव भिन्नां
रुचं रवेः केतनरत्नभासा ।
महारथौघेन न सन्निरुद्धा
पयोदमन्द्रध्वनिना धरित्री ॥ ३ ॥

अथ त्रयोविंशतिश्लोकैः वितर्कमिवाह । मदेत्यादि । इह युद्धे मदस्रुतिभिः मदप्रवाहैः श्यामाः कृता इति श्यामिताः गण्डलेखाः कपोलभागा येषां ते विक्रान्ताः पराक्रमं कुर्वन्तः । कर्त्तरि क्तः । "शूरो वीरश्च विक्रान्तः" इत्यमरः । तैः नरैः अधिरूढाः सहिष्णवो रणभरक्षमाः युधां युद्धानामभिज्ञाः शिक्षिता इत्यर्थः । कृद्योगात् कर्मणि षष्ठी । किञ्च नगानाम् उच्छ्रायं पर्वतानामौन्नत्यम् । घञन्तेन उपसर्गस्य समासो नोपसृष्टात् घञ् प्रत्ययः । "श्रिणीभुवोऽनुपसर्गे" इत्यत्रानुपसर्ग इति निषेधात् । आक्षिपन्तः प्रतिषेधयन्तः इव स्थिताः तथा उन्नता इत्यर्थः । नागाः गजाः इह संग्रामे न क्रामन्ति न चरन्ति । यथा युद्धान्तरेषु इति शेषः । एवम् उत्तरत्रापि सर्वत्र द्रष्टव्यं तथापि कथं मे शक्तिह्रासोऽयमिति सर्वत्र तात्पर्य्यार्थः ॥२॥

विचित्रेति । विचित्रया नानावर्णया केतनानां रत्नानि तेषां भासा प्रभया भिन्नां संवलितां रवेः रुचं कान्तिं विचित्र-

समुल्लसत्प्रासमहोर्मिमालं
परिस्फुरच्चामरफेनपङ्क्ति ।
विभिन्नमर्य्यादमिहातनोति
नाश्वीयमाशा जलधेरिवाम्भः ॥ ४ ॥
हताहतेत्युद्धतभीमघोषैः
समुज्झिता योद्धृभिरभ्यमित्रम् ।
न हेतयः प्राप्ततडित्त्विषः खे
विवस्वदंशुज्वलिताः पतन्ति ॥ ५ ॥

यता विचित्रवर्णां कुर्वतेव स्थितेन इति केतनौन्नत्यनिमित्तेयम् उत्प्रेक्षा । पयोदमन्द्रध्वनिना मेघगम्भीरघोषेण महतां रथानामोघेन समूहेन धरित्री न सन्निरुद्धा न आवृता ॥३॥

समुल्लसदिति । इह युद्धे प्रासाः कुन्ताः । "प्रासस्तु कुन्तः" इत्यमरः । ते महोर्मय इव तेषां मालाः समुल्लसन्त्यो यत्र तत्समुल्लसत्प्रासमहोर्मिमालम् । चामराणि फेना इव परिस्फुरन्त्यः चामरफेनानां पङ्क्तयो यत्र तत्तथोक्तम् । अश्वीयम् अश्वसमूहः । "वृन्दे त्वश्वीयमाश्ववत्" इत्यमरः । जलधेः अम्भ इव भिन्नमर्य्यादम् उन्मर्य्यादम् उच्छृङ्खलं यथा तथा आशा दिशो न आतनोति न आवृणोति ॥४॥

हतेति । हत प्रहरत आहत विध्यत । हन्तेर्लोट् मध्यमपुरुषबहुवचनम् । "अनुदात्तोपदेश" इत्यादिना अनुनासिकलोपः । आहतेत्यत्र कर्मणः प्रयोगासम्भवेऽपि हन्तेः स्वाभाविकसकर्मकत्वस्य अनपायात् अकर्मकत्वस्य च अत्र विवक्षितत्वेन कर्मनिवृत्त्या एव तन्निवृत्तेः "आङो यमहनः" इति आत्मनेपदम् । इत्येवमुद्धताः प्रगल्भाः भीमाश्च घोषा येषां तैः योद्धृभिः

अभ्यायतः सन्ततधूमधूम्रं
व्यापि प्रभाजालमिवान्तकस्य ।
रजः प्रतूर्णाश्वरथाङ्गनुन्नं
तनोति न व्योमनि मातरिश्वा ॥ ६ ॥

भूरेणुना रासभधूसरेण
तिरोहिते वर्त्मनि लोचनानाम् ।
नास्त्यत्र तेजस्विभिरुत्सुकानाम्
अह्नि प्रदोषः सुरसुन्दरीणाम् ॥ ७ ॥

योधैः अभ्यमित्रम् अमित्रानभि समुज्झिता मुक्ता विवस्वत अंशुभिः प्रतिफलितैः इति भावः । ज्वलिता दीपिता अत एव प्राप्ताः तड़िनां त्विषो याभिः ता हेतयः शस्त्राणि खे न पतन्ति । "हेतिः स्यादायुधे" इति विश्वः ॥५॥

अभीति । अभ्यायतो वीरान् हन्तुम् आगच्छतः । इणः शतृप्रत्ययः । अन्तकस्य कालस्य सम्बन्धि सन्ततं सततं धूमवत् धूम्रं व्यापि व्यापकं प्रभाजालमिव स्थितं प्रतूर्णैः अश्वैः रथाङ्गैः रथचक्रैश्च नुन्नं प्रेरितं रजो मातरिश्वा मरुत् व्योमनि अन्तरिक्षे न तनोति न विस्तारयति ॥६॥

भूरेणुरिति । अत्र आहवे रासभो गर्दभः तद्वत् धूसरेण ईषत्पाण्डुना । "ईषत्पाण्डुस्तु धूसरः" इत्यमरः । "रासभो गर्दभः खरः" इत्यमरः । भूरेणुना रजसा लोचनानां वर्त्मनि चक्षुर्मार्गे तिरोहिते सति तेजस्विभिः तेजस्विषु वीरेषु उत्सुकानां वीरवरणार्थम् आगतानाम् इत्यर्थः । "प्रसितोत्सुकाभ्यां तृतीया च" इति विकल्पात् तृतीया । सुरसुन्दरीणाम् अह्नि

रथाङ्गसंक्रीड़ितमश्वहेषा
बृहन्ति मत्तद्विपबृंहितानि।
सङ्घर्षयोगादिव मूर्च्छितानि
ह्रादं निगृह्णन्ति न दुन्दुभीनाम्॥ ८॥

अस्मिन् यशःपौरुषलोलुपानाम्
अरातिभिः प्रत्युरसं क्षतानाम्।
मूर्च्छान्तरायं मुहुरुच्छिनत्ति
आसारशीतं करिशीकराम्भः॥ ९॥

दिवसे एव प्रदोषो रात्रिर्नास्ति अन्धकारवत्त्वात् दृष्टेः निरोधानात् रात्रिभ्रमः स्यात् इति भावः॥ ७॥

रथाङ्गेति। रथाङ्गसंक्रीड़ितं रथचक्रकूजितम् अश्वानाञ्च हेषा ह्रेषितानि शब्दितानि। "अश्वानां ह्रेषा हेषा च निःस्वनः" इत्यमरः। बृहन्ति महान्ति मत्तद्विपानां बृंहितानि। "बृंहितं करिगर्जितम्" इत्यमरः। सङ्घर्षयोगात् इव परस्परसम्बन्धात् इव मूर्च्छितानि वृद्धिं गतानि सन्ति। "नपुंसकमनपुंसक" इत्यादिना नपुंसकैकशेषः। दुन्दुभीनां ह्रादं निर्घोषम्। "स्वाननिस्वाननिर्ह्राद" इत्यमरः। न निगृह्णन्ति न तिरस्कुर्वन्ति॥ ८॥

अस्मिन्निति। अस्मिन् रणे यशःपौरुषयोः लोलुपानां गृध्नूनाम् अत एव अरातिभिः प्रत्युरसम् उरसि। "प्रतेरुरसः सप्तमी स्यात्" इति समासान्तः। क्षतानां विद्धानां सम्बन्धिनं मूर्च्छैव अन्तरायो रणविघ्नस्तम् आसारशीतं वर्षधाराशीतलम्। "धारासम्पात आसारः" इत्यमरः। करीणां शीकर एवाम्भः कर्त्तृ मुहुर्नोच्छिनत्ति न नाशयति॥ ९॥

असृङ्नदीनामुपचीयमानै:
विदारयद्भिः पदवीं ध्वजिन्याः ।
उच्छ्रायमायान्ति न शोणितौघैः
पङ्कैरिवाश्यानघनैस्तटानि ॥ १० ॥

परिक्षते वक्षसि दन्तिदन्तैः
प्रियाङ्कशीता नभसः पतन्ती ।
नेह प्रमोहं प्रियसाहसानाम्
मन्दारमाला विरलीकरोति ॥ ११ ॥

निषादिसन्नाहमणिप्रभौघे
परीयमाणे करिशीकरेण ।

असृगिति । असृङ्नदीनां तटानि उपचीयमानैः उपचीयमानैः तथा ध्वजिन्याः पदवीं विदारयद्भिः । "विदूरयद्भिः" इति पाठे विदूरां दूरसञ्चारां कुर्वद्भिः आश्याना ईषच्छुष्काः । "संयोगादेरातोधातोर्यण्वतः" इति श्यायतेर्निष्ठानत्वम् । घनाः सान्द्राः तैः आश्यानघनैः शोणितौघैः पङ्कैरिव उच्छ्रायं वृद्धिं न आयान्ति न प्राप्नुवन्ति ॥ १० ॥

परीति । इह रणे दन्तिदन्तैः गजदन्तैः परिक्षते ताड़िते वक्षसि नभसः पतन्ती प्रियायाः अङ्क इव शीता शीतला सुखकरी मन्दारमाला सुरैर्मुक्तेति शेषः । प्रियं साहसं येषां तेषां प्रियसाहसानां यतो गजाभियायिनाम् इति भावः । प्रमोहं प्रहारमूर्च्छां न विरलीकरोति न मन्दीकरोति ॥ ११ ॥

निषादीति । करिणां शीकरेण पुष्करतुषारेण परीयमाणे व्याप्यमाने निषादिनो हस्त्यारोहाः । "हस्त्यारोहा निषादिनः"

अर्कत्त्विषोन्मीलितमभ्युदेति
न खण्डमाखण्डलकार्मुकस्य ॥ १२ ॥

महीभृता पक्षवतेव भिन्ना
विगाह्य मध्यं परवारणेन ।
नावर्त्तमाना निनदन्ति भीमम्
अपान्निधेराप इव ध्वजिन्यः ॥ १३ ॥

महारथानां प्रतिदन्त्यनीकम्
अधिस्यदस्यन्दनमुत्थितानाम् ।
आमूललूनैरतिमन्युनेव
मातङ्गहस्तैर्व्रियते न पन्थाः ॥ १४ ॥

इत्यमरः । तेषां सन्नाहाः कवचानि तेषां मणिप्रभौघे रत्नांशुजाले अर्कस्य त्विषा तेजसा उन्मीलितम् उत्पादितम् आखण्डलकार्मुकस्य इन्द्रधनुषः । "आखण्डलः सहस्राक्षः" इत्यमरः । खण्डं न अभ्युदेति ॥१२॥

महीति । पक्षवता महीभृता मैनाकेन इव परवारणेन शत्रुगजेन मध्यं विगाह्य प्रविश्य भिन्नाः क्षोभिताः ध्वजिन्यः सेनाः "ध्वजिनी वाहिनी सेना" इत्यमरः । अपां निधेः सागरस्य आप इव । आवर्त्तमानाः भ्रमन्त्यः सत्यः । "स्यादावर्त्तोऽम्भसां भ्रमः" इत्यमरः । भीमं न निनदन्ति ॥१३॥

महारथानामिति । प्रतिदन्त्यनीकं दन्तिसैन्यं प्रति "अनीकं तु रणे सैन्ये" इति विश्वः । अधिस्यदाः महारयाः स्यन्दना रथा यत्र तत् तथा । "रंहस्तरसी तु रयः स्यदः" इत्यमरः । उत्थितानां प्रस्थितानां महारथानां रथिकविशेषाणाम् ।

धृतोत्पलापीड़ इव प्रियायाः
शिरोरुहाणां शिथिलः कलापः ।
न बर्हभारः पतितस्य शङ्कोः
निषादिवक्षःस्थलमातनोति ॥ १५ ॥

उज्झत्सु संहार इवास्तसङ्ख्यम्
अह्नाय तेजस्विषु जीवितानि ।
लोकत्रयास्वादनलोलजिह्वं
न व्याददात्याननमत्र मृत्युः ॥ १६ ॥

तदुक्तम्—"आत्मानं सारथिं चाश्वान् रक्षन् युध्येत यो नरः । स महारथसंज्ञः स्यादित्याहुर्नीतिकोविदाः ॥" इति लक्षणात् । पन्था मार्ग आमूलात् लूनैः छिन्नैः मातङ्गहस्तैः नागकरैः अतिमन्युना अतिक्रोधेनैव न व्रियते न निरुध्यते ॥१४॥

धृतेति । पतितस्य वक्षसि मग्नस्य शङ्कोः तोमरस्य सम्बन्धी "वा पुंसि शङ्कुर्ना सवेला तोमरोऽस्त्रियाम्" इत्यमरः । बर्हभारः तन्मूलबद्धो लाञ्छनपिच्छकलापो धृतं उत्पलापीडः कुवलयशेखरो यस्मिन् सः । प्रियायाः सम्बन्धी शिथिलः स्रस्तः शिरोरुहाणां कलापः केशपाश इव निषादिनो हस्त्यारोहस्य वक्षःस्थलं न आतनोति न व्याप्नोति ॥१५॥

उज्झत्स्विति । अत्र आहवे संहारे कल्पान्ते इव तेजस्विषु वीरेषु अस्तसंख्यम् असंख्यं यथा तथा अह्नाय झटिति । "द्राक झटित्यञ्जसाह्नाय" इत्यमरः । जीवितानि उज्झत्सु त्यजत्सु सत्सु मृत्युः लोकत्रयस्य आस्वादने भक्षणे लोला गृध्नुः जिह्वा यस्मिन् तदाननं न व्याददाति न विवृणोति । "आङो

इयञ्च दुर्वारमहारथानाम्
आक्षिप्य कीर्त्तिं महतां बलानाम्।
शक्तिर्ममावस्यति हीनयुद्धे
सौरीव ताराधिपधाम्नि दीप्तिः॥ १७॥
माया स्विदेषा ? मतिविभ्रमो वा ?
ध्वस्तं नु मे वीर्य्यमुताहमन्यः ?।
गाण्डीवमुक्ता हि यथा पुरा मे
पराक्रमन्ते न शराः किराते॥ १८॥

दीनास्यविहरणे' इत्यत्रानास्यविहरण इति निषेधात् आत्मनेपदम्॥१६॥

सत्यमेव तथापि किं ते कुत्सितं तत्राह। इयमिति। इयं मम शक्तिश्च दुर्वाराः पराक्रमिणो महारथा येषु तेषां महतां बलानां वीर्य्यम् आक्षिप्य निरस्य ताराधिपधाम्नि चन्द्रतेजसि सूर्य्यस्य इयं सौरी। "सूर्य्यतिष्यागस्त्यमत्स्यानां य उपधायाः" इति स्त्रियां ङीष् यकारस्य लोपः। दीप्तिः इव हीनयुद्धे किरातरणे अवस्यति अवसीदति। एतच्च विरुद्धम् अत्यद्भुतं च इति भावः। "षोऽन्तकर्म्मणि" इति धातोर्लट्॥१७॥

मायेति। एषा शक्तिह्रासरूपा माया स्वित् देवताक्षोभणं नाम ? मतिविभ्रमो बुद्धिविपर्य्ययो वा ? अथवा मे वीर्य्यं ध्वस्तं नष्टं नु ? उत अहमन्यः अर्जुनो न वा ? कुतः हि यस्मात् गाण्डीवमुक्ताः मे शराः पुरा यथा पूर्वं परिपन्थिषु इवेत्यर्थः किराते न पराक्रमन्ते अप्रतिबन्धेन न प्रवर्त्तन्ते। "उपपराभ्याम्" इति आत्मनेपदं वृत्तिः अप्रतिबन्धः॥१८॥

पुंसः पदं मध्यममुत्तमस्य
द्विधेव कुर्वन् धनुषः प्रणादैः ।
नूनं तथा नैष यथास्य वेषः
प्रच्छन्नमप्यूहयते हि चेष्टा ॥ १९ ॥

धनुः प्रबन्धध्वनितं रुषेव
सकृद्विकृष्टा विततेव मौर्वी ।
सन्धानमुत्कर्षमिव व्युदस्य
मुष्टेरसम्भेद इवापवर्गे ॥ २० ॥

पुंस इति । किञ्च उत्तमस्य पुंसः पुरुषोत्तमस्य मध्यमं पदम् आकाशं धनुषः प्रणादैः । "उपसर्गादसमासेऽपि णोपदेशस्य" इति णत्वम् । द्विधा कुर्वन्निव विदारयन्निव स्थितः स एष किरातो नूनं तथा तथाभूतो न । कीदृशः ? तत्राह । अस्य पुरुषस्य यथा यथाभूतो वेषो वर्त्तते इति शेषः । अतो न अयं किरातस्वरूप इत्यर्थः । कुतो हि यस्मात् चेष्टाव्यापारः प्रच्छन्नमपि निगूढमपि स्वरूपम् ऊहयते तर्कयते तस्य स्वभावादव्यभिचारादिति भावः ॥१९॥

अथ चतुर्भिश्चेष्टामेवाचष्टे । धनुरिति । धनुः रुषेव प्रबन्धेन अविच्छेदेन ध्वनितम् । ध्वनतेः कर्त्तरि क्तः । मौर्वी च सकृत् विकृष्टा वितता इव एकवाराकर्षणात् एव वितता इव स्थिता सन्धानं बाणसन्धानम् उत्कर्षम् उद्धरणं व्युदस्य इव वर्जयित्वा किम् कृतमिति शेषः । अपवर्गे बाणमोक्षेऽपि मुष्टेः असम्भेदः असम्भेदनमिव मुष्टिबन्धं विना एव बाणमोक्षः कृत इव इति हस्तलाघवोक्तिः ॥२०॥

अंसावववष्टब्धनतौ समाधिः
शिरोधराया रहितप्रयासः।
धृता विकारांस्त्यजता मुखेन
प्रसादलक्ष्मीः शशलाञ्छनस्य ॥ २१ ॥
प्रहीयते कार्य्यवशागतेषु
स्थानेषु विष्टब्धतया न देहः।
स्थितप्रयातेषु ससौष्ठवश्च
लच्येषु पातः सदृशः शराणाम् ॥ २२ ॥
परस्य भूयान् विवरेऽभियोगः
प्रसह्य संरक्षणमात्मरन्ध्रे ।

अंसाविति। किञ्च अंसौ अवष्टब्धौ स्थिरौ अवस्थापितौ च नतौ च अवष्टब्धनतौ शिरोधरायाः कन्धरायाः समाधिः सस्थानविशेषश्च रहितः प्रयासो यस्य स तथोक्तः निःप्रयास इत्यर्थः। तथा विकारान् त्यजता अस्मृतत्वात् निर्विकारेण इत्यर्थः। मुखेन शशलाञ्छनस्य इन्दोः प्रसादलक्ष्मीः धृता। असम्भवत्सम्बन्धो निदर्शनालङ्कारः ॥ २१ ॥

प्रहीयत इति। तस्य देहः कार्य्यवशेन प्रयोजनवशेन आगतेषु स्थानेषु आलीढ़ादिस्थानकेषु विष्टब्धतया स्थिरतया कदापि न प्रहीयते न त्यज्यते किन्तु स्थिर इव तिष्ठतीत्यर्थः। सुष्ठु भावः सौष्ठवं लाघवम्। उद्गात्रादित्वादञ्प्रत्ययः। तेन सह वर्त्तमानः ससौष्ठवः शराणां पातश्च स्थितानि अचलानि प्रयातानि चलानि तेषु स्थितप्रयातेषु विषये चलाचलेषु लक्ष्येषु सदृशः एकरूपः ॥ २२ ॥

भीष्मेऽप्यसम्भाव्यमिदं गुरौ वा
न सम्भवत्येव वनेचरेषु ॥ २३ ॥
अप्राकृतस्याहवदुर्मदस्य
निवार्य्यमस्यास्त्रबलेन वीर्य्यम् ।
अल्पीयसोऽप्यामयतुल्यवृत्तेः
महापकाराय रिपोर्विवृद्धिः ॥ २४ ॥
इति कुलकम् ।
स सम्प्रधार्य्यैवमहार्य्यसारः
सारं विनेष्यन् सगणस्य शत्रोः ।

परस्येति । किञ्च परस्य विवरे रन्ध्रे । अल्पेऽपीति शेषः । भूयान् भूयिष्ठः प्रसह्य झटिति अभियोगः ज्ञातत्वं परस्य रन्ध्रज्ञातत्वात् प्रहारोद्योग इत्यर्थः । आत्मरन्ध्रे विवरे अनल्पेऽपि इति शेषः । प्रसह्य झटिति संरक्षणं गोपनम् इद द्वयं भीष्मेऽपि गुरौ वा द्रोणे वापि असम्भाव्यं दुर्वितर्कं वनेचरेषु न सम्भवति एव अतो न अयं किरातः किन्तु एष तिरोहितवेषः कोऽपि अमानुष अपुरुष इति भावः ॥ २३ ॥

अप्राकृतस्येति । अप्राकृतस्य उक्तरीत्या असाधारणस्य आहवदुर्मदस्य रणमत्तस्य अस्य किरातस्य वीर्य्यं तेजः अस्त्रबलेन दिव्यशस्त्रमहिम्ना निवार्य्यं निवारणीयम् । अन्यथा अनिवार्य्यत्वम् अस्य इति भावः । तथाहि अल्पीयसोऽपि अल्पस्य अपि आमयतुल्यवृत्तेः रोगसमानविक्रियस्य । "रोगव्याधिगदामयाः" इत्यमरः । रिपोः विवृद्धिः महापकाराय । किन्तु अयं महानुभाव इति भावः ॥ २४ ॥

प्रस्वापनास्त्रं द्रुतमाजहार
ध्वान्तं घनारब्ध इवार्द्धरात्रः ॥ २५ ॥

प्रसक्तदावानलधूमधूम्रा
निरुन्धती धाम सहस्ररश्मेः ।
महावनानीव महातमिस्रा
छाया ततानेशबलानि काली ॥ २६ ॥
युग्मम् ।

आसादिता तत्प्रथमं प्रसह्य
प्रगल्भतायाः पदवीं हरन्ती ।

स इति । असह्यसंसारः अनिवार्य्यवीर्य्यः सोऽर्जुनः एव सम्प्रधार्य्य निर्धार्य्य सगणस्य सानुगस्य शत्रोः सारं सत्त्वं विनिघ्नन् अपनेष्यन् प्रस्वाप्यते शाय्यते अनेनेति प्रस्वापनं तदेवास्त्रं घनारब्धः मेघावरुद्धः अर्द्धरात्रः निशीथः । "अर्द्धरात्रनिशीथौ द्वौ" इत्यमरः । "अर्द्धं नपुंसकम्" इति समासः । "अहः सर्वैकदेश" इत्यादिना समासान्तः "रात्राह्नाहाः पुंसि"इति पुंलिङ्गता । ध्वान्तमिव द्रुतम् आजहार आचकर्ष ॥२५॥

प्रसक्तेति । प्रसक्तः सन्ततो यो दावानलधूमः तद्वत् धूम्रा धूमरा सहस्ररश्मेः धाम तेजो निरुन्धती आवृण्वती काली कृष्णवर्णा । "जानपद" इत्यादिना ङीष् । छाया कान्तिः । ईशबलानि महातमिस्रा महती तमःसन्ततिः । "तमिस्रा तु तमस्ततिः" इति विश्वः । महावनानीव ततान व्यानशे ॥२६॥

आसादितेति । तदेव आसादनं प्रथमं तत् प्रथमं यथा तथा प्रसह्य आसादिता कल्पिता प्रगल्भतायाः व्यवहारधार्ष्ट्यस्य

सभेव भीमा विदधे गणानां
निद्रानिरासं प्रतिभागुणस्य ॥ २७ ॥
गुरुस्थिराण्युत्तमवंशजत्वात्
विज्ञातसाराण्यनुशीलनेन ।
केचित् समाश्रित्य गुणान्वितानि
सुहृत्कुलानीव धनूंषि तस्थुः ॥ २८ ॥
कृतान्तदुर्वृत्त इवापरेषां
पुरः प्रतिद्वन्द्विनि पाण्डवास्त्रे ।
अतर्कितं पाणितलान्निपेतुः
क्रियाफलानीव तदायुधानि ॥ २९ ॥

टवीं हरन्ती भीमा भयङ्करी निद्रा उक्तविशेषणा सभा संसदिव गणानां प्रतिभा प्रज्ञा शक्तिः सैव गुणः तस्य निरासं प्रतिभाक्षयं विदधे चक्रे ॥२७॥

गुर्वीति। केचित् उत्तमवंशजत्वात् वंशो वेणुः कुलं च। "वंशो वेणौ कुले च" इति विश्वः। "गुरूणि महान्ति स्थिराणि दृढानि च गुरुस्थिराणि अनुशीलनेन परिचयबलेन विज्ञातः सारो बलं येषां तानि गणैः मौर्वीभिः शौर्यादिभिः च अन्वितानि धनूंषि सुहृत्कुलानि मित्रकुलानि इव समाश्रित्य तस्थुः धनूंषि अवष्टभ्य निदध्युः इत्यर्थः ॥२८॥

कृतान्तेति। कृतान्तदुर्वृत्ते दैवदुश्चेष्टिते इव। "कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु" इति विश्वः। पाण्डवास्त्रे पुरः प्रतिद्वन्द्विनि सति प्रतिकूलवर्त्तिनि सति तदा तस्मिन् काले

अंसस्थलैः केचिदभिन्नधैर्य्याः
स्कन्धेषु संश्लेषवतां तरूणाम् ।
मदेन मीलन्नयनाः सलीलं
नागा इव स्रस्तकरा निषेदुः ॥ ३० ॥

तिरोहितेन्दोरथ शम्भुमूर्ध्नः
प्रणम्यमानं तपसान्निवासैः ।
सुमेरुशृङ्गादिव बिम्बमार्कं
पिशङ्गमुच्चैरुदियाय तेजः ॥ ३१ ॥

छायां विनिर्धूय तमोमयीं तां
तत्त्वस्य संवित्तिरिवापविद्याम् ।

अपरेषाम् आयुधानि क्रियाफलानि इव कृष्यादिफलानि इव अतर्कितम् अविचारितम् एव पाणितलात् निपेतुः ॥ २९ ॥

अंसेति । अभिन्नधैर्य्याः तदानीमपि अच्युतधैर्य्याः केचित् अंसस्थलैः अंसभागैः सह संश्लेषवतां तरूणां स्कन्धेषु प्रकाण्डेषु मदेन मीलन्ति नयनानि येषां ते नागाः गजा इव स्रस्तकराः स्रस्तहस्ताः सन्तः सलीलं निषेदुः निषण्णाः ॥ ३० ॥

तिरोहितेति । अथ तिरोहितेन्दोः किरातमायया छन्नचन्द्रात् शम्भुमूर्ध्नः सकाशात् सुमेरुशृङ्गात् अर्कसम्बन्धि बिम्बम् इव तपसां निवासैः तापसैः प्रणम्यमानम् अभिवन्द्यमानम् पिशङ्गं तेजः उच्चैः ऊर्ध्वम् उदियाय प्रकटीबभूव तत्र तत्र अटन् इति भावः ॥ ३१ ॥

छायामिति । इन्दुमौलेः द्युतिः कान्तिः तत्त्वस्य संवित्तिः ज्ञानं तत्त्वज्ञानम् अपविद्याम् अविद्याम् इव तां तमोमयीं

ययौ विकाशं द्युतिरिन्दुमौलेः
आलोकमत्यादिशती गणेभ्यः ॥ ३२ ॥
त्विषां ततिः पाटलिताम्बुवाहा
सा सर्वतः पूर्वसरीव सन्ध्या।
निनाय तेषां द्रुतमुल्लसन्ती
विनिद्रतां लोचनपङ्कजानि ॥ ३३ ॥
पृथग्विधान्यस्त्रविरामबुद्धाः
शस्त्राणि भूयः प्रतिपेदिरे ते।
मुक्ता वितानेन बलाहकानां
ज्योतींषि रम्या इव दिग्विभागाः ॥ ३४ ॥

छाया निद्रां विनिर्धूय निरस्य गणेभ्यः आलोकं वस्तुप्रकाशं चिरम् अत्यादिशती वितरन्ती विकाशं विस्तारं ययौ ॥ ३२ ॥

त्विषामिति। सर्वतः पाटलिताः पाटलीकृताः अम्बुवाहाः यया सा तथोक्ता त्विषां तेजसां ततिः पूर्वा सरतीति पूर्वसरी। "पूर्वे कर्त्तरि" इति टप्रत्यये ङीप्। "सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः" इति पूर्वाशब्दस्य पुंवद्भावः। सन्ध्या प्रातःसन्ध्या इव उल्लसन्ती प्रसरन्ती तेषां गणानां लोचनपङ्कजानि द्रुतं विनिद्रतां विकासं निनाय ॥ ३३ ॥

पृथगिति। अस्त्रविरामेण प्रस्वापनास्त्रोपरमेण बुद्धा विनिद्रास्ते गणा बलाहकानां वितानेन मेघपटलेन मुक्ता अत एव रम्या दिग्विभागा दिगन्ताः ज्योतींषि नक्षत्राणि इव। "ज्योतिस्ताराग्निभाज्वालादृक्प्रकाशरमात्मसु" इति वैजयन्ती। पृथग्-

द्यौरुन्नतामिव दिशः प्रसेदुः
स्फुटं विसस्रे सवितुर्मयूखैः।
क्षयं गतायामिव यामवत्यां
पुनः समीयाय दिनं दिनश्रीः॥ ३५ ॥

महास्त्रदुर्गे शिथिलप्रयत्नं
दिग्वारणेनेव परेण रुग्णे।
भुजङ्गपाशान् भुजवीर्य्यशाली
प्रबन्धनाय प्रजिघाय जिष्णुः॥ ३६ ॥

विधानि नानाविधानि शस्त्राणि भूयः प्रतिपेदिरे जगृहुः इत्यर्थः॥३४॥

द्यौरिति। तदा यामवत्यां रात्रौ क्षयं गतायां विभातायाम् इव द्यौः अन्तरिक्षम् उन्नतामिव ऊर्ध्वम् उत्पपात इव इत्युत्प्रेक्षा। दिशः प्रसेदुः सवितुः मयूखैः स्फुटं स्पष्टं विसस्रे विसृतम्। भावे लिट्। दिनश्रीः पुनः प्रसन्नकान्तिः दिनं समीयाय संजगाम। अत्र वैयधिकरण्येन गुणक्रिययोः समुच्चयेन समुच्चयोऽलङ्कारः तस्य च समुन्नमनोत्प्रेक्षया इव शब्दवाच्ययानुप्रवेशलक्षणसङ्करः। दिक्प्रसादो गुणः शेषाः क्रियाः॥३५॥

महास्त्रेति। भुजवीर्य्यशाली जिष्णुः अर्जुनो महास्त्रं प्रस्वापनास्त्रं तत् दुर्गम् इव तस्मिन् महास्त्रदुर्गे दिग्वारणेन दिग्गजेन इव परेण शत्रुणा शिथिलप्रयत्नम् अल्पप्रयासं यथा तथा रुग्णे भग्ने सति। रुजोभङ्गे कर्मणि क्तः "ओदितश्च" इति निष्ठातकारस्य नत्वम्। प्रबन्धनाय प्रकर्षेण बन्धनाय भुजङ्गा एव पाशाः तान् प्रजिघाय प्रहितवान्॥३६॥

जिह्वाशतान्युल्लसयन्त्यजस्रं
लसत्तडिल्लोलविषानलानि ।
त्रासात् निरस्ता भुजगेन्द्रसेना
नभश्चरैस्तत्पदवीं विवव्रे ॥ ३७ ॥

दिङ्नागहस्ताकृतिमुद्वहद्भिः
भोगैः प्रशस्तासितरत्ननीलैः ।
रराज सर्पावलिरुल्लसन्ती
तरङ्गमालेव नभोऽर्णवस्य ॥ ३८ ॥

निःश्वासधूमैः स्थगितांशुजालः
फणावतामुत्फणमण्डलानाम् ।
गच्छन्निवास्तं वपुरभ्युवाह
विलोचनानां सुखमुष्णरश्मिः ॥ ३९ ॥

जिह्वेति । लसन्तः तडिल्लोला विद्युच्चञ्चला विषानला विषाग्नयो येषु तानि जिह्वाशतानि अजस्रम् उल्लसयन्ती चलयन्ती । भुजगेन्द्रसेना त्रासात् भयात् । नभश्चरैः निरस्ता त्यक्ता तेषां नभश्चराणां पदवीं मार्गं विवव्रे विशेषेण रुरोध॥३७

दिङ्नागेति । दिङ्नागहस्ताकृतिम् उद्वहद्भिः दिक्करिकराकारैः तथा प्रशस्तानि समीचीनानि असितरत्नानि इन्द्रनीलमणयः तद्वत् नीलैः भोगैः कायैः उपलक्षिता सर्पावलिः उल्लसन्ती प्रक्षुभ्यन्ती नभ एव अर्णवः तस्य तरङ्गमाला इव रराज । रूपकोत्थापिता इयमुत्प्रेक्षा ॥३८॥

निःश्वासेति । उष्णरश्मिः अस्तं गच्छन् इव उन्नमितानि फणामण्डलानि येषां तेषां फणावतां सर्पाणां निःश्वासेषु ये

प्रतप्तचामीकरभासुरेण
दिशः प्रकाशेन पिशङ्गयन्त्यः।
निश्चक्रमुः प्राणहरेक्षणानां
ज्वालामहोल्का इव लोचनेभ्यः॥ ४०॥

आक्षिप्तसम्पातमपेतशोभम्
उद्दह्निधूमाकुलदिग्विभागम्।
वृतं नभो भोगिकुलैरवस्थां
परोपरुद्धस्य पुरस्य भेजे॥ ४१॥

तमाशु चक्षुःश्रवसां समूहं

धूमास्तैः स्थगितम् आच्छादितमंशुजालं यस्य स तथोक्तः अत एव विलोचनानां सुखं सुखकरं वपुरस्य्, वाह ॥३९॥

प्रतप्तेति। प्राणहराणि ईक्षणानि येषां तेषां प्राणहरेक्षणानां दृष्टिविषाणां लोचनेभ्यो नेत्रेभ्यः।"लोचनं नयनं नेत्रम्" इत्यमरः। प्रतप्तं यच्चामीकरं सुवर्णं तद्वत् भासुरेण। "भञ्ज-भासमिदो घुरच्" इति घुरच्प्रत्ययः। प्रकाशेन तेजसा दिशः पिशङ्गयन्त्यः ज्वालामहोल्का इव निश्चक्रमुः निर्जग्मुः ॥४०॥

आक्षिप्तेति। आक्षिप्तः प्रतिषिद्धः सम्पातः सञ्चारो यस्मिन् तत् सिद्धानां पक्षिणां च इति शेषः अपेता शोभा यस्मात् तत् अपेतशोभं गतश्रीकम् उद्गतवह्निधूमाभ्याम् आकुलाः दिग्विभागा दिगन्ताः यस्मिन् तत् भोगिकुलैः सर्पकुलैः वृतमावृतं परोपरुद्धस्य शत्रु,वेष्टितस्य पुरस्यावस्थामिव अवस्थां दशां भेजे उक्तरीत्या तत्साधर्म्यं प्राप्तम् इत्यर्थः। निदर्शनालङ्कारः ॥४१॥

मन्त्रेण तार्क्ष्योदयकारणेन।
नेता नयेनेव परोपजापं
निवारयामास पतिः पशूनाम् ॥ ४२ ॥

प्रतिघ्नतीभिः कृतमीलितानि
द्युलोकभाजामपि लोचनानि।
गरुत्मतां सन्ततिभिर्विहायः
क्षणप्रकाशाभिरिवावतेने ॥ ४३ ॥

ततः सुपर्णव्रजपक्षजन्मा
नानागतिर्मण्डलयन् जवेन।
जरत्तृणानीव वियन्निनाय
वनस्पतीनां गहनानि वायुः ॥ ४४ ॥

तमिति। पशूनां पतिः शिवः तं चक्षुःश्रवसां सर्पाणां समूहं तार्क्ष्योदयकारणेन गरुड़ाविर्भावहेतुना मन्त्रेण नेता नायको नयेन नीत्या परेषाम् उपजापं परोपजापं परकृतं स्वमण्डलभेदम् इव। "भेदोपजापावुपधा" इत्यमरः। आशु निवारयामास ॥४२॥

प्रतीति। द्युलोकभाजामपि अनिमिषाणामपि कृतं मीलनं निमिषो येषां तानि लोचनानि दृष्टीः प्रतिघ्नतीभिः प्रतिबध्नतीभिः। हन्तेः शतरि ङीप्। गरुत्मतां तार्क्ष्याणां संहतिभिः समूहैः क्षणप्रकाशाभिः विद्युद्भिः इव तासां सौवर्णत्वात् इति भावः विहायः अन्तरिक्षम् अवतेने व्यानशे ॥४३॥

तत इति। ततः सुपर्णव्रजानां तार्क्ष्यकुलानां पक्षेभ्यो जन्म यस्य स नानागतिः विचित्रगतिः वायुः वनस्पतीनां वृक्षाणां

मनःशिलाभङ्गनिभेन पश्चात्
निरुध्यमानं निकरेण भासाम्।
व्यूढैरुरोभिश्च विनुद्यमानम्
नभः ससर्पेव पुरः खगानाम् ॥४५॥

दरीमुखैरासवरागताम्रं
विकासि रुक्मच्छदधाम पीत्वा।
जवानिलाघूर्णितसानुजालो
हिमाचलः क्षीव इवाचकम्पे ॥४६॥

गहनानि जरत्तृणानि जीर्णतृणानि इव जवेन मण्डलयन् भ्रमयन् वियत् अन्तरिक्षं निनाय ॥४४॥

मनःशिलेति। मनःशिला धातुविशेषः तस्याः भङ्गः छेदः तन्निभेन तत्सदृशेन भासां निकरेण कान्तिपुञ्जेन पश्चाद्भागे निरुध्यमानम् आव्रियमाणं व्यूढैः विशालैः उरोभिः वक्षोभिश्च। "उरो वत्सञ्च वक्षश्च" इत्यमरः। विनुद्यमानं प्रेर्यमाणं नभः खगानां गरुड़ानां पुरः ससर्पेव ससारेव। उत्तरोत्तरदेशतिरोधानेन गच्छतां खगानां अपूर्वोऽपि पुरोभागः सादृश्यात् पूर्ववदुपलभ्यमानतया नभस एव छेदनात् पुरः ससर्प इव इति उत्प्रेक्षालङ्कारः ॥४५॥

दरीति। जवानिलेन आघूर्णितानि भ्रमितानि सानुजालानि यस्य स हिमाचलः आसवस्य रागो रक्तता तद्वत् ताम्रं गुणयोः एव उपमानोपमेयभावः। विकासि विकस्वरं रुक्मच्छदाः सुपर्णपक्षाः तार्क्ष्याः तेषां धाम तेजो दरीभिर्मुखैः

प्रवृत्तनक्तन्दिवसन्धिदीप्तैः
नभस्तलं गाञ्च पिशङ्गयद्भिः ।
अन्तर्हितार्कैः परितः पतद्भिः
छायाः समाचिच्छिपिरे वनानाम् ॥४७॥

स भोगिसङ्घः शममुग्रधाम्नां
सैन्येन निन्ये विनतासुतानाम् ।
महाध्वरे विध्यपचारदोषः
कर्मान्तरेणेव महोदयेन ॥४८॥

इव दरीमुखैः पीत्वा चीवो मत्त इव आचकम्पे आचचाल
उपमाव्यापितेयम् उत्प्रेचा ॥४६॥

प्रवृत्तेति। नक्तञ्च दिवा च नक्तन्दिवम्। "अचतुर" इत्या-
दिना सप्तम्यर्थे इयोरपि अव्यययोः इन्द्वैकवद्भावनिपाते समा-
सान्तः। लक्षणया तु अहोरात्रमात्रवाची। प्रवृत्तः प्रादुर्भूतो
यो नक्तन्दिवस्य सन्धिः सन्ध्या तद्दत् दीप्तैः शोभितैः नभस्तलं
गां भुवञ्च पिशङ्गयद्भिः पिशङ्गीकुर्वद्भिः अन्तर्हितः आच्छा-
दितोऽर्को यैः तैः पतद्भिः पक्षिभिः परितः सर्वतो वनानां
छायाः समाचिच्छिपिरे समाक्षिप्ता अन्तर्बहिश्च तेजःप्रकाशात्
क्वापि अन्तर्हिता इत्यर्थः ॥४७॥

स इति। स भोगिसङ्घः सर्पसमूहः उग्रधाम्नां तेजस्विनां
विनतासुतानां तार्क्ष्यपक्षिणां सैन्येन महाध्वरे महाक्रतौ
विध्यपचारदोषः कर्मस्खलनदोषः महोदयेन महासामर्थ्येन
अथवा महता फलेन तन्मूलेन प्रकृतक्रियासिद्धेः इति कर्मान्त-
रेण प्रायश्चित्तेन इव शमं शान्तिं निन्ये प्रापितः ॥४८॥

साफल्यमस्त्रे रिपुपौरुषस्य
कृत्वा गते भाग्य इवापवर्गम् ।
अनिन्धनस्य प्रसभं समन्युः
समाददेऽस्त्रं ज्वलनस्य जिष्णुः ॥ ४९ ॥

ऊर्द्ध्वन्तिरश्चीनमधश्च कीर्णैः
ज्वालासटैर्लङ्घितमेघपङ्क्तिः ।
आयस्तसिंहाकृतिरुत्पपात
प्राण्यन्तमिच्छन्निव जातवेदाः ॥ ५० ॥

भित्त्वेव भाभिः सवितुर्मयूखान्
जज्वाल विष्वग् विसृतस्फुलिङ्गः ।

साफल्यमिति । अस्त्रे सर्पास्त्रे भाग्ये प्राग्भवीये शुभे कर्मणि इव रिपुपौरुषस्य रिपुपराक्रमस्य साफल्यं कृत्वा अपवर्गम् अवसानं समाप्तिं गते सति स्वनिवृत्त्या परसाफल्यात् सफलीकरणोपचारः । समन्युः सक्रोधो जिष्णुः अर्जुनः अनिन्धनस्य इन्धनं विनैव उत्पादितस्य ज्वलनस्य ज्वलनप्रदीपकम् अस्त्रम् आग्नेयास्त्रं प्रसभं शीघ्रं समाददे जग्राह ॥४९॥

ऊर्द्ध्वमिति । ऊर्द्ध्वं तिरश्चीनं तिर्य्यक् । "विभाषाञ्चेरदिक्स्त्रियाम्" इति खप्रत्ययः । अधश्च कीर्णैः विसृतैः ज्वाला एव सटाः केसराः । "सटा जटाकेशरयोः" इति विश्वः । तैः लङ्घितमेघपङ्क्तिः अतिक्रान्तजलदावलिः आयस्तस्य लङ्घनोद्यतस्य सिंहस्य इव आकृतिः यस्य स जातवेदा अग्निः प्राण्यन्तं प्राणिनां संहारम् इच्छन् इव उत्पपात ॥५०॥

भित्त्वेति । भाभिः तेजोभिः सवितुः मयूखान् किरणान् ।

विशीर्य्यमाणाश्मनिनादधीरं
ध्वनिं वितन्वन्नकृशः कृशानुः ॥ ५१ ॥
चयानिवाद्रीनिव तुङ्गशृङ्गान्
क्वचित्पुराणीव हिरण्मयानि ।
महावनानीव च किंशुकानां
ततान वह्निः पवनानुवृत्त्या ॥ ५२ ॥
मुहुश्चलत्पल्लवलोहिनीभिः
उच्चैः शिखाभिः शिखिनाऽवलीढाः ।

"किरणोऽस्रमयूखांशु" इत्यमरः। भित्त्वेव अभिहत्येव विष्वक् समन्तात् विसृताः स्फुलिङ्गा यस्य सः स्फुलिङ्गोदयस्य मयूखाभिघातहेतुकत्वम् उत्प्रेक्षते। "स्फुलिङ्गोऽग्निकणः" इत्यमरः। अकृतोऽतनुः कृशानुः वह्निः विशीर्य्यमाणस्य विदलतोऽश्मनो निनादमिव धीरम् उद्धतं ध्वनिं वितन्वन् जज्वाल॥५१॥

चयानिति। वह्निः पवनानुवृत्त्या वायुवशेन चयानिव हिरण्मयान् प्राकारान् इव। "चयः समूहे प्राकारे" इति विश्वः। तुङ्गशृङ्गान् अद्रीन् इव क्वचित् हिरण्मयानि इति "दाण्डिनायन" इत्यादिना निपातनात् साधुः। पुराणि नगराणि इव तथा किंशुकानाम् पलाशतरूणाम्। "पलाशे किंशुकः पर्णः" इत्यमरः। महावनानि इव पुष्पितानि इति भावः। ततान वितस्तार तदाकारेण जज्वाल इत्यर्थः ॥५२॥

मुहुरिति। सान्द्राञ्जनश्यामरुचः घनकज्जलश्यामरुचः पयोदाः मुहुः चलन्त्यश्च ताः पल्लवलोहिन्यो लोहितवर्णाश्च ताः ताभिः चलत्पल्लवलोहिनीभिः।"वर्णादनुदात्तात्तोपधात्तो नः"

तलेषु मुक्ताविशदा बभूवुः
सान्द्राञ्जनश्यामरुचः पयोदाः ॥ ५३ ॥

लिलिक्षतीव क्षयकालरौद्रे
लोकं विलोलार्चिषि लोहिताश्वे।
पिनाकिना हूतमहाम्बुवाहम्
अस्त्रं पुनः पाशभृतः प्रणिन्ये ॥ ५४ ॥

ततो धरित्रीधरतुल्यरोधसः
तडिल्लतालिङ्गितनीलमूर्त्तयः।
अधोमुखाकाशसरिन्निपातिनीः
अपः प्रसक्तं मुमुचुः पयोमुचः ॥ ५५ ॥

इति ङीप्। तकारस्य नकारः। शिखिनः अग्नेः उच्चैः उन्नताभिः शिखाभिः ज्वालाभिः अवलीढाः दग्धा इत्यर्थः। अत एव तलेषु अधोभागेषु मुक्ताविशदा मौक्तिकधवला बभूवुः जलसंशोषणात् इति भावः। "अधःस्वरूपयोरस्त्री तलम्" इत्यमरः॥५३॥

लिलिक्षतीति। क्षयकालरौद्रे कल्पान्तकालभयावहे विलोलार्चिषि चलज्ज्वाले लोहिताश्वे ज्वलने। "लोहिताश्वो वायुसखः" इत्यमरः। लोकं लिलिक्षति लेढुम् इच्छति सति जिघत्सति सतीव। लिहेः सन्नन्तात् शतृप्रत्ययः। पिनाकिना पुनः हूताः आहूताः आकारिता महाम्बुवाहाः येन तत् पाशभृतो वरुणस्य अस्त्रं प्रणिन्ये प्रयुक्तम् ॥५४॥

तत इति। ततो वरुणास्त्रप्रयोगानन्तरं धरित्रीधरतुल्यरोधसः पर्वतसमप्रान्ताः। "रोधः स्यात् प्रान्तकूलयोः" इति विश्वः। तडिल्लताभिः आलिङ्गिता नीलमूर्त्तयः नीलाङ्गानि

परासहतध्वस्तशिखे शिखावतो
वपुष्यधिक्षिप्तसमिद्धतेजसि ।
कृतास्पदास्तप्त इवायसि ध्वनिं
पयोनिपाताः प्रथमे वितेनिरे ॥ ५६ ॥

महानले भिन्नसिताभ्रपातिभिः
समेत्य सद्यः क्वथनेन फेनताम् ।
व्रजद्भिरार्द्रेन्धनवत्परिच्चयं
जलैर्वितेने दिवि धूमसन्ततिः ॥ ५७ ॥

येषां ते पयोमुचो मेघाः अधोमुखा आकाशसरिदिव निपतन्तीति अधोमुखाकाशसरिन्निपातिनोः । "कर्त्तर्य्युपमाने" इति णिनिः । अपो जलानि प्रसक्ताम् अनुबन्धम् अविच्छिन्नं यथा तथा मुमुचुः । इतः प्रभृति वंशस्थवृत्तम् ॥ ५५ ॥

पराहतेति । पराहताः अभिहताः अतो ध्वस्ता निर्वापिताः शिखा ज्वाला यस्य तस्मिन् पराहतध्वस्तशिखे । अधिक्षिप्तं प्रहारितम् अतः समिद्धं झटिति प्रदीप्तं तेजो यस्य तस्मिन् शिखावतोऽग्नेः वपुषि तप्ते अयसि लौह इव कृतास्पदाः कृतस्थितयः । "आस्पदं प्रतिष्ठायाम्" इति निपातः । प्रथमे पयोनिपाताः जलपाता ध्वनिं वितेनिरे विस्तारयामासुः ॥ ५६ ॥

महानल इति । महानले अग्नौ भिन्नानि खण्डितानि सिताभ्राणीव पतन्तीति भिन्नसिताभ्रपातिभिः । "कर्त्तर्य्युपमाने" इति णिनिप्रत्ययः । अत एव सद्यः क्वथनेन पाकेन फेनतां प्राप्य समेत्य परिच्चयं नाशं व्रजद्भिः जलैः आर्द्रेन्धनवत् आर्द्रकाष्ठैः तुल्यम् । "तेन तुल्यं क्रिया चेद्वतिः" इति वति-

स्वकेतुभिः पाण्डुरनीलपाटलैः
समागताः शक्रधनुःप्रभाभिदः।
असंस्थितामादधिरे विभावसो-
र्विचित्रचीनांशुकचारुतां त्विषः॥ ५८॥
जलौघसम्मूर्च्छनमूर्च्छितस्वनः
प्रसक्तविद्युल्लसितैधितद्युतिः।
प्रशान्तिमेष्यन् धृतधूममण्डलो
बभूव भूयानिव तत्र पावकः॥ ५९॥
प्रवृद्धसिन्धूर्मिचयस्थवीयसां

प्रत्ययः। दिवि गगने धूमसन्ततिः वितेने विस्तारिता फेना-दिकम् आर्द्रेन्धनेऽपि तुल्यम् ॥५७॥

स्वकेतुभिरिति। पाण्डुरैः नीलैः पाटलैश्च पाण्डुरनील-पाटलैः विचित्रैः स्वकेतुभिः धूमैः समागताः सङ्गताः अत एव शक्रधनुषः प्रभाभिदो द्युतिभाजः विभावसोः अग्नेः त्विषः असंस्थिताम् अस्थिरां विचित्रस्य चीनांशुकस्य पट्टदुकूलस्य चारुताम् आदधिरे दधुः ॥५८॥

जलौघेति। जलौघानाम् उदकप्रवाहाणां सम्मूर्च्छनेन मिलनेन मूर्च्छितस्वनः प्रवृद्धघोषः। "मूर्च्छनं मिलने प्रोक्तं वृद्धौ मूर्च्छितमेव वा" इति सज्जनः। प्रसक्तैः सङ्गतैः विद्युतां तडि-ल्लतानां लसितैः स्फुरणैः एधिता वर्द्धिता द्युतिः यस्य सः धृत-धूममण्डलः जलाघातात् सम्भूतधूमपटलः पावकः प्रशान्ति-मेष्यन् तत्र देशे भूयान् इव बभूव भूयस्तया स्थापित इवेति उत्प्रेक्षा ॥५९॥

चयैर्विभिन्ना पयसां प्रपेदिरे ।
उपात्तसन्ध्यारुचिभिः सरूपतां
पयोदविच्छेदलवैः कृशानवः ॥ ६० ॥

उपैत्यनन्तद्युतिरप्यसंशयं
विभिन्नमूलोऽनुदयाय संक्षयम् ।
तथाहि तोयौघविभिन्नसंहतिः
स हव्यवाहः प्रययौ पराभवम् ॥ ६१ ॥

अथ विहितविधेयैराशु मुक्ता वितानैः
असितनगनितम्बश्यामभासां घनानाम् ।
विकसदमलधाम्नां प्राप नीलोत्पलानां
श्रियमधिकविशुद्धां वह्निदाहादिव द्यौः ॥ ६२ ॥

प्रवृद्धेति । प्रवृद्धानां सिन्धोः ऊर्मीणां चया राशय इव । स्थवीयसां स्थूलतराणां पयसां चयैः पूरैः विभिन्ना विश्लेषिताः, कृशानवोऽग्नय उपात्तसन्ध्यारुचिभिः प्राप्तसन्ध्यारागैः पयोदानां विच्छिद्यन्त इति विच्छेदा विच्छिन्ना विचिन्ना लवाः शकलाः तैः सरूपतां समानरूपतां प्रपेदिरे इत्युपमा ॥ ६० ॥

उपैतीति । अनन्तद्युतिः महातेजाः अपि विभिन्नमूलः असंशयं यथा तथा अनुदयाय पुनः अनुत्थानाय संक्षयं नाशम् उपैति । तथाहि । तोयौघैः विभिन्ना संहतिः सङ्घातो यस्य स तथोक्तः स हव्यवाहोऽग्निः पराभवं नाशं प्रययौ । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ६१ ॥

अथेति । अथ अग्निनिर्वाणानन्तरं विहितविधेयैः कृतकृत्यैः असितनगस्य अञ्जनाद्रेः नितम्बः कटकः तद्वत् श्यामभासा

इति विविधमुदासे सव्यसाची यदस्त्रं
बहुसमरनयज्ञः सादयिष्यन्नरातिम् ।
विधिरिव विपरीतः पौरुषं न्यायवृत्तेः
सपदि तदुपनिन्ये रिक्ततां नीलकण्ठः॥६३॥
वीतप्रभावतनुरप्यतनुप्रभावः
प्रत्याचकाङ्क्ष जयिनीं भुजवीर्य्यलक्ष्मीम् ।

ञ्जनानां वितानैः पटलैः मुक्ता द्यौः आकाशो वह्निदाहात् इवेति उत्प्रेक्षा । विकसन्ति च तानि अमलधामानि स्वच्छकान्तीनि च तेषां नीलोत्पलानाम् अधिकविशुद्धाम् अत्युज्ज्वलां श्रियं प्राप इति निदर्शनालङ्कारः ॥६२॥

इतीति । बहुसमरनयान् अनेकरणोपायान् जानाति इति बहुसमरनयज्ञः । "आतोऽनुपसर्गे कः" इति कप्रत्ययः । न तु "इगुपध" इत्यादिना आकारान्तादनुपपदात् कर्मोपपदो भवति "विप्रतिषेधेन" इति वार्त्तिकव्याख्याने भाष्यकारेण अर्थज्ञशब्दम् उदाहृत्य अस्य अर्थज्ञशब्दस्य कर्मोपपदत्वं दर्शितम् । सव्यसाची अर्जुनः अरातिं सादयिष्यन् अवसादयितुकामः सन् इत्यर्थः । क्रियार्थक्रियायां लृटि तस्य शत्रादेशः । इति पूर्वोक्तप्रकारेण विविधं यदस्त्रम् उदासे प्रयुक्तवान् इत्यर्थः । "उपसर्गादस्यत्यूह्योर्वेति वाच्यम्" इति आत्मनेपदम् । विपरीतो विधिः प्रतिकूलं दैवम् । "विधिर्विधाने दैवेऽपि" इत्यमरः । न्यायेन नीत्या वृत्तिः वर्त्तनं यस्य तस्य नीतिनिष्ठस्य पौरुषम् इव नीलकण्ठः शिवः सपदि तदस्त्रं रिक्ततां व्यर्थताम् उपनिन्ये संहृतवान् । मालिनीवृत्तम् ॥६३॥

वीतेति । भूतपतिना शम्भुना अनुग्रहीष्यता इति शेषः ।

अस्त्रेषु भूतपतिनापहृतेषु जिष्णुः
वर्षिष्यता दिनकृतेव जलेषु लोकः॥ ६४ ॥

इति श्रीमहामहोपाध्यायभारविकृतौ किराता-
र्जुनीये महाकाव्ये किरातार्जुनयुद्धं
नाम षोड़शः सर्गः ॥ १६ ॥

---

अस्त्रेषु अपहृतेषु सत्सु वर्षिष्यता उत्तरत्र सहस्रगुणं वितरिष्यता दिनकृता सूर्य्येण जलेषु अपहृतेषु सत्सु लोक इव वीतप्रभावो गतास्त्रमहिमा अन्यत्र गतशक्तिः अत एव तनुः क्षीणो वीत-प्रभावतनुः तथापि अतनुप्रभावो निसर्गतः सामर्थ्यात् अधिक अन्यत्र उद्योगवान् ततो जिष्णुः अर्जुनः जयिनीं जयनशीलाम्। "जिदृक्षि" इत्यादिना इनिप्रत्ययः। भुजवीर्य्यलक्ष्मीं भुजपरा-क्रमसम्पदम्। उभयत्रापि पुरुषकारमिति यावत्। तत्काल-कुण्ठताम् इति शेषः। प्रत्याचकाङ्क्ष प्रत्याहर्त्तुम् इयेष इत्यर्थः। यथा लोको नद्यादिजलापहारेऽपि उपायान्तरेण कूपादिना जीवितुम् इच्छति तद्वत् अस्त्रबलापहारेऽपि भुजबलेन एव जेतुम् इयेष इति भावः। वसन्ततिलकावृत्तम् ॥६४॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविर-
चितायां किरातार्जुनीयव्याख्यायां घण्टापथ-
समाख्यायां षोड़शः सर्गः।

---

# सप्तदशः सर्गः ।

—*—

अथापदामुद्धरणक्षमेषु
मित्रेष्विवास्त्रेषु तिरोहितेषु ।
धृतिं गुरुश्रीर्गुरुणाभिपुष्यन्
स्वपौरुषेणेव शरासनेन ॥ १ ॥

भूरिप्रभावेण रणाभियोगात्
प्रीतो विजिह्मश्च तदीयवृत्त्या ।
स्पष्टोऽप्यविस्पष्टवपुःप्रकाशः
सर्पन्महाधूम इवाद्रिवह्निः ॥ २ ॥

अथ पञ्चभिः पार्थं विशिषयन् षड्भिः कुलकमाह । अथे-त्यादिभिः । अथ जयलक्ष्मीप्रत्याकाङ्क्षानन्तरम् आपदाम् उद्धरणक्षमेषु आपन्निवारणसमर्थेषु अस्त्रेषु प्रस्वापनादिषु तादृ-शेषु मित्रेषु इव तिरोहितेषु अन्तर्हितेषु सत्सु गुरुणा महता स्वपौरुषेणेव तादृशेन शरासनेन धृतिं धैर्य्यम् अभिपुष्यन् वर्द्धयन् अद्यापि धनुषि पौरुषे च सति कियानयं किरात इति धैर्य्यम् अवलम्बमान इत्यर्थः । अत एव गुरुश्रीः प्रवृद्धशोभासम्पत्तिः । "पद्मा मा लक्ष्मीः श्रीर्निगद्यते" इति शाश्वतः ॥१॥

भूरीति । पुनश्च भूरिप्रभावेण महानुभावेन सह रणाभि-योगात् युद्धलाभात् प्रीतः । तदीयवृत्त्या शत्रुवृत्त्या विजिह्मो विस्मयश्च तथा स्पष्टः दीप्त्या प्रज्वलन् अपि अविस्पष्टो वपुः-प्रकाशो यस्य सः । कुतः ? सर्पन् प्रसरन् महान् धूमो यस्य स सर्पन्महाधूमोऽद्रिवह्निरिव स्थितः ॥२॥

तेजः समाश्रित्य परैरहार्य्यं
निजं महन्मित्रमिवोरुधैर्य्यम्।
आसादयन्नस्खलितप्रभावं
भीमे भुजालम्बमिवारिदुर्गे ॥ ३ ॥

वंशोचितत्वादभिमानवत्या
सम्प्राप्तया सम्प्रियतामसुभ्यः।
समक्षमादित्सितया परेण
बध्वेव कीर्त्त्या परितप्यमानः ॥ ४ ॥

तेज इति। पुनश्च परैः अरिभिः अहार्य्यम् अभेद्यं निजं स्वकीयं महत्तेजो वीर्य्यं मित्रमिव समाश्रित्य। अत एव भीमे भयानके अरिः एव दुर्गं तस्मिन् अरिदुर्गे शत्रुसङ्कटे अस्खलितप्रभावम् अचलशीलम् उरु महद्धैर्य्यं भुजालम्बम् इव हस्तावष्टम्भम् इव आसादयन् प्राप्नुवन् ईदृशे सङ्कटेऽपि महावीर्य्यत्वात् धैर्य्यम अत्यजन इत्यर्थः ॥३॥

वंशेति। पुनश्च अभिमानो ममताबुद्धिः तद्वत्या विषयतया कर्म्मणि कर्त्तृत्वोपचारः। अभिमानास्पदेन इत्यर्थः। अन्यत्र कुलशीलाद्यभिमानवत्या वंशोचितत्वात् स्वकुलानुरूपत्वात् असुभ्यः प्राणेभ्योऽपि सम्प्रियतां सम्प्राप्तया परेण शत्रुणा अक्ष्णोः समीपे समक्षम् अग्रतः। "अव्ययीभावे शरत्प्रभृतिभ्यः" इति समासान्तः टच्प्रत्ययः। आदातुं ग्रहीतुम् इष्टया आदित्सितया आजिहीर्षितया इत्यर्थः। आङ्पूर्वाद्ददातेः सन्नन्तात् कर्म्मणि क्तः। बध्वा इव कीर्त्त्या हेतुना परितप्यमानः। कर्त्तरि शानच् "हेतौ" इति तृतीया। कन्यया शोक इतिवत् ॥४॥

पतिं नगानामिव बद्धमूलम्
उन्मूलयिष्यन् तरसा विपक्षम् ।
लघुप्रयत्नं निगृहीतवीर्य्य-
स्त्रिमार्गगावेग इवेश्वरेण ॥ ५ ॥

संस्कारवत्त्वाद्रमयत्सु चेतः
प्रयोगशिक्षागुणभूषणेषु ।
जयं यथार्थेषु शरेषु पार्थः
शब्देषु भावार्थमिवाशशंसे ॥ ६ ॥

पतिमिति । पुनश्च नगानां पतिं हिमवन्तम इव बद्धमूलं विपक्षं शत्रुं तरसा बलेन उन्मूलयिष्यन् । किञ्च त्रिभिः मार्गैः गच्छति इति त्रिमार्गगा गङ्गा । उत्तरपदसमासः । तस्याः वेग इव ईश्वरेण लघुप्रयत्नम् अल्पप्रयासं यथा तथा निगृहीतवीर्य्यः प्रतिबद्धशक्तिः हृतास्त्रशक्तिरिति यावत् । पुरा किल हिमाद्रि-विदलनाय गगनात् पतन्तं गङ्गाप्रवाहं गङ्गाधरो निजजटा-जूटेन निजग्राह इति पौराणिकी कथा । तद्वत् इत्यर्थः ॥५॥

संस्कारेति । एवम्भूतः पार्थः संस्कारवत्त्वात् संस्कारश्चित्त-वासना अन्यत्र साधुत्वम् असाधूनां प्रयोगनिषेधादिति भावः । अथवा संस्कारो व्युत्पत्तिः तद्वत्त्वात् चेतो रमयत्सु, प्रयोगः सन्धानमोचादिः शिक्षा अभ्यासो गुणः तदाहितोऽतिशयः मौर्वी वा । अन्यत्र तु प्रयोगोऽभियुक्तव्यवहारः शिक्षा अभ्यासः गुणाः स्वस्वस्थानकरणादयः श्लेषप्रसादादयो वा ते भूषणं येषां तेषु यथा यथाभूता अर्था येषां तेषु यथार्थेषु । अन्यत्र नियता-र्थेषु शृणन्ति हिंसन्ति इति शराः तेषु जयं तं निर्वाहकत्वात्

भूयः समाधानविवृद्धतेजा
नैवं पुरा युद्धमिति व्यथावान् ।
स निर्ववामास्रममर्षनुन्नं
विषं महानाग इवेक्षणाभ्याम् ॥ ७ ॥

तस्याहवायासविलोलमौलेः
संरम्भताम्रायतलोचनस्य ।
निर्वापयिष्यन्निव रोषतप्तं
प्रस्नापयामास मुखं निदाघः ॥८॥

तदाधारत्वविवक्षायां सप्तमी । शब्देषु उपपदेषु भावः प्रवृत्ति-निमित्तं सामान्यादिः स एवार्थः तमिव आशशंसे आचकाङ्क्षे । शासिशंसत्योराङ्पूर्वयोरिच्छायाम् आत्मनेपदमुपसंख्यानात् । यथा शाब्दिकाः शब्दैः अर्थं साधयन्ति तद्वदयं शरैः जयं साधयितुम् इयेष इत्यर्थः ॥६॥

भूय इति । भूयः पुनरपि समाधानेन युद्धाय मनोव्यव-स्थापनेन विवृद्धतेजाः प्रवृद्धप्रतापः पुरा पुरातनं युद्धम् एवम् इत्थं शक्तिसादकरं न भवतीति हेतोः व्यथावान् परितापवान् सोऽर्जुनः ईक्षणाभ्यां दृष्टिभ्यां महानागो महासर्पो विषमिव अमर्षनुन्नं क्रोधोत्थापितम् अस्रम् अश्रु निर्ववाम निर्जगार । सात्विकानां वीररससाधारण्यात् रौद्रे रसेऽप्युदयोक्तिः।"स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभेदोऽथ वेपथुः । वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्विका मताः" ॥७॥

तस्येति । आहवायासेन युद्धायासेन विलोलमौलेः स्रस्त-केशबन्धस्य ।"चूडा किरीटं केशाश्च संयता मौलयस्त्रयः" इत्य-

क्रोधान्धकारान्तरितो रणाय
भ्रूभेदरेखाः स बभार तिस्रः।
घनोपरुद्धः प्रभवाय वृष्टेः
ऊर्द्ध्वांशुराजीरिव तिग्मरश्मिः॥ ९ ॥

स प्रध्वनय्याम्बुदनादि चापं
हस्तेन दिङ्नाग इवाद्रिशृङ्गम्।
बलानि शम्भोरिषुभिस्तताप
चेतांसि चिन्ताभिरिवाशरीरः॥ १० ॥

मरः। संरम्भताम्रे कोपारुणे आयते लोचने यस्य तस्य। "संरम्भः सम्भ्रमे कोपे" इति विश्वः। तस्य अर्जुनस्य रोषतप्तं मुखं निदाघो घर्मः निर्वापयिष्यन् शिथिलीकरिष्यन् इवेत्युत्प्रेक्षा। प्रस्नापयामास सिषेच स्वेदं जनयामास इत्यर्थः। स्नातेः मित्वविकल्पितत्वात् ह्रस्वविकल्पः॥८॥

क्रोधेति। क्रोधोऽन्धकारः इव तेनान्तरित आवृतः सोऽर्जुनः घनोपरुद्धो मेघावृतः तिग्मरश्मिः रविः वृष्टेः प्रभवाय वर्षणाय तिस्रः ऊर्द्ध्वांशूनां राजीरिव अर्कस्य ऊर्द्ध्वांशोः एव उदयो वृष्टिलिङ्गमित्यागमः। रणाय रणप्रवृत्तये तिस्रः त्रिसङ्ख्याः भ्रूभेदो भ्रूभङ्गः तस्य रेखा बभार॥९॥

स इति। सोऽर्जुनः अम्बुदवत् नदतीति अम्बुदनादि "कर्त्तर्य्युपमाने"इति णिनिः। चापं दिङ्नागः दिग्गजः अद्रिशृङ्गम् इव हस्तेन करेण प्रध्वनय्य प्रध्वनयन् शम्भोः बलानि अशरीरोऽनङ्गः कामः चेतांसि युवमनांसि चिन्ताभिः प्रियोजनध्यानैः इव इषुभिः तताप तापयामास। तपतिः सकर्मकः।

सद्वादितेवाभिनिविष्टबुद्धौ
गुणाभ्यसूयेव विपक्षपाते।
अगोचरे वागिव चोपरेमे
शक्तिः शराणां शितिकण्ठकाये॥ ११॥
उमापतिं पाण्डुसुतप्रणुन्नाः
शिलीमुखा न व्यथयाम्बभूवुः।

अत्र इषुशब्दः स्त्रीलिङ्गः अन्यथा उपमानोपमेययोः भिन्नलिङ्ग-तादोषात्। "पत्री रोप इषुर्द्वयोः" इत्यमरः॥१०॥

सद्वादितेति। अभिनिविष्टा शास्त्रनिश्चिता बुद्धिः यस्य स तस्मिन् अभिनिविष्टबुद्धौ शास्त्रनिष्ठितमतौ विषये सद्वादिता प्रामाणिकार्थसमर्थकता इव न हि सम्यक् अभ्यस्तशास्त्रं प्रति सद्वाद्यपि शक्नोतीति व्याचक्षते केचित्। अन्ये तु अभिनिविष्ट-बुद्धौ आग्रहाविष्टचित्ते विषये सद्वादिता हितोपदेष्टृत्वमिव न हि आग्रही हितं गृह्णातीति भावः। विपक्षपाते वीतरागे विषये गुणाभ्यसूया गुणासहिष्णुता इव समदर्शी द्विषन्तमपि न द्वेष्टि यत इति भावः। अगोचरे अवाङ्मनसगोचरे ब्रह्मणि वागिव। "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह" इति श्रुतेः इति भावः। शराणां शक्तिः शितिकण्ठकाये शिवशरीरे उपरेमे उपरता तस्य अक्षोभ्यमहिमत्वात् इति भावः।"विभाषा कर्मकात्" इत्यस्य वैकल्पिकत्वात् पक्षे आत्मनेपदम्। अत्र मालोपमा॥११॥

उमेति। पाण्डुसुतेन प्रणुन्ना प्रक्षिप्ताः शिलीमुखा बाणाः उमापतिं शिवम् अभ्युत्थितस्य अभ्युन्नतस्य अद्रिपतेः नितम्बं कटकं हैमन्तं भवस्य हैमनस्य। "सर्वत्राण् च तलोपश्च" इति

अभ्युत्थितस्याद्रिपतेर्नितम्बम्
अर्कस्य पादा इव हैमनस्य ॥ १२ ॥

सम्प्रीयमाणोऽनुबभूव तीव्रं
पराक्रमं तस्य पतिर्गणानाम् ।
विषाणभेदं हिमवानसह्यं
वप्रानतस्येव सुरद्विपस्य ॥ १३ ॥

तस्मै हि भारोद्धरणे समर्थं
प्रदास्यता बाहुमिव प्रतापम् ।
चिरं विषेहेऽभिभवस्तदानीं
स कारणानामपि कारणेन ॥ १४ ॥

अण्प्रत्ययः तकारलोपश्च। अर्कस्य पादा रश्मय इव। "पादा रश्म्यङ्घ्रितुर्य्यांशाः" इत्यमरः। न व्यथयाम्बभूवुः। मध्ये स्थितस्यासुमतां समूहमर्कस्य इति पाठान्तरे मध्ये स्थितस्य हैमनस्य अर्कस्य पादाः किरणाः असुमतां प्राणिनां समूहम् इवेति न दुःखमुत्पादयामासुः इति ॥१२॥

समिति। गणानां पतिः शिवः तीव्रं तस्य अर्जुनस्य पराक्रमं वप्रे रोधसि आनतस्य परिणतस्य वप्रप्रहारिण इत्यर्थः। सुरद्विपस्य असह्यं विषाणभेदं दन्तप्रहारं हिमवान् इव सम्प्रीयमाणः संहृष्यन् अनुबभूव अनुभवति स्म। तस्याक्षोभ्यत्वादनुजिघृक्षुत्वाच्च इति भावः ॥१३॥

तस्मै हीति। तस्मै पार्थाय भारस्य भूभारस्य उद्धरणे उद्वहने समर्थं प्रतापं बाहुम् इव अवष्टम्भतया इति शेषः। अन्यथा भारोद्वहनस्य दुष्करत्वात् इति भावः। "स प्रतापः प्रभावश्च

प्रत्याहतौजाः कृतसत्त्ववेगः
पराक्रमं ज्यायसि यस्तनोति ।
तेजांसि भानोरिव निष्पतन्ति
यशांसि वीर्य्यज्वलितानि तस्य ॥ १५ ॥

दृष्टावदानाद् व्यथतेऽरिलोकः
प्रध्वंसमेति व्यथिताच्च तेजः ।
तेजोविहीनं विजहाति दर्पः
शान्तार्चिषं दीपमिव प्रकाशः ॥ १६ ॥

यत्तेजः कोषदण्डजम्" इत्यमरः । प्रदास्यता वितरिष्यता कारणानां ब्रह्मादीनामपि कारणेन जनकेन देवेन सोऽर्जुनो-ऽभिभवः तदानीं चिरं विषेहे सोढः वात्सल्यात् इति भावः ॥१४॥

अथ त्रिभिः भगवदभिप्रायम् आविष्कुर्वन् चतुर्भिः कला-पकमाह । प्रत्याहतेति । प्रत्याहतौजाः परेण प्रतिहतबलः सन्नपि कृतसत्त्ववेगः कृतोत्साहातिशयः सन् यः पुमान् ज्यायसि स्वस्मादपि अधिके पराक्रमं तनोति तस्य पुंसः भानोः अर्कस्य तेजांसीव वीर्य्येण शौर्य्येण ज्वलितानि प्रकाशितानि यशांसि निष्पतन्ति उद्भवन्तीत्यर्थः । हीनस्य अधिकाभियोगो यशस्कर इति भावः ॥ १५ ॥

ततः किमित्यत आह । दृष्टेति । दृष्टम् अवदानं महत् कर्म यस्य तस्मात् दृष्टावदानात् दृष्टपौरुषात् अरिलोकः शत्रुजनः व्यथते बिभेति । व्यथितात् भीतात् तेजः प्रध्वंसं नाशमेति ।

ततः प्रयात्यस्तमदावलेपः
स जय्यतायाः पदवीं जिगीषोः ।
गन्धेन जेतुः प्रमुखागतस्य
गन्धद्विपस्येव मतङ्गजौघः ॥ १७ ॥
एवं प्रतिद्वन्द्विषु तस्य कीर्त्तिं
मौलीन्दुलेखाविशदां विधास्यन् ।
इयेष पर्य्यायजयावसादां
रणक्रियां शम्भुरनुक्रमेण ॥ १८ ॥

तेजोविहीनं दर्पः उत्साहः शान्तार्चिषं निर्वाणज्वालं दीपं प्रकाश इव विजहाति त्यजति ॥ १६ ॥

तत इति । ततो दर्पहान्यनन्तरम् अस्तौ क्षयं गतौ मदावलेपौ मदगर्वौ यस्य सः । सोऽरिलोको गन्धेन मदगन्धेनैव जेतुः जयनशीलस्य । तृच्प्रत्ययः । प्रमुखागतस्य अभिमुखागतस्य गन्धद्विपस्यान्यो मतङ्गजौघः मत्तगजसमूह इव जिगीषोः नायकस्य जय्यतायाः । पदवीं प्रयाति प्राप्नोति विजिगीषुणा जेतुं शक्यो भवतीत्यर्थः । "क्षय्यजय्यौ शक्यार्थे" इति निपातः । अत्र श्लोकद्वयेन ज्यायसि पराक्रमकरणादीनां पूर्वपूर्वस्य उत्तरोत्तरं प्रति कारणत्वकथनात् कारणमालाख्योऽलङ्कारः । लक्षणन्तु उक्तम् ॥ १७ ॥

एवमिति । एवम् उक्तरीत्या प्रतिद्वन्द्विषु प्रत्यरिमध्ये तस्य अर्जुनस्य मौलीन्दुलेखाविशदां कीर्त्तिं विधास्यन् करिष्यन् अनुक्रमेण अविपर्य्यासेन पर्य्यायेण जयोऽवसादो भङ्गश्च तौ जयावसादौ यस्यां तां पर्य्यायजयावसादां रणक्रियाम् इयेष इच्छति स्म जयानन्तरं भङ्गो भङ्गानन्तरं जय इति पर्य्यायार्थः ।

मुनेर्विचित्रैरिषुभिः स भूयान्
निन्ये वशं भूतपतेर्बलौघः ।
सहात्मलाभेन समुत्पतद्भिः
जातिस्वभावैरिव जीवलोकः ॥ १९ ॥

कलापकम् ।

वितन्वतस्तस्य शरान्धकारं
त्रस्तानि सैन्यानि रवं निशेमुः ।
प्रवर्षतः सन्ततवेपथूनि
क्षपाघनस्येव गवां कुलानि ॥ २० ॥

तस्य विपर्य्यासोऽन्यतरनैरन्तर्य्यं तदभावोऽनुक्रम इति अपौनरुक्त्यम् ॥ १८ ॥

मुनेरिति। मुनेः विचित्रैः इषुभिः स भूयान् असङ्ख्यो भूतपतेः बलौघः आत्मलाभेन जन्मना सह समुत्पतद्भिः आविर्भवद्भिः आजन्मसिद्धैर इत्यर्थः। जातयः गोत्वमनुष्यत्वादयः स्वभावा जातिनियता धर्माः तैः जातिस्वभावैः जीवलोकः प्राणिजातमिव वशं निन्ये नीतः। कर्मणि लिट्। प्राणिनो जातिधर्मान् इव गणान् मुनिशरान् न अतिक्रमितुं शेकुः इत्यर्थः ॥ १९ ॥

वितन्वत इति। त्रस्तानि सैन्यानि सन्ततवेपथूनि निरन्तरकम्पानि गवां कुलानि वृन्दानि प्रवर्षतो वृष्टिं कुर्वतः क्षपाघनस्य रात्रिमेघस्य इव शरैः योऽन्धकारस्तं वितन्वतः विस्तारयतः तस्य मुनेः सम्बन्धिनं रवं शरवर्षघोषं निशेमुः शुश्रुवुः न तु किञ्चित् ददृशुः चेष्टा तु दूरे आस्ताम् इति भावः ॥ २० ॥

स सायकान् साध्वसविप्लुतानां
क्षिपन् परेषामतिसौष्ठवेन ।
शशीव दोषावृतलोचनानां
विभिद्यमानः पृथगाबभासे ॥ २१ ॥

क्षोभेण तेनाथ गणाधिपानां
भेदं ययावाकृतिरीश्वरस्य ।
तरङ्गकम्पेन महाह्रदानां
छायामयस्येव दिनस्य भर्त्तुः ॥ २२ ॥

प्रसेदिवांसं न तमाप कोपः
कुतः परस्मिन् पुरुषे विकारः ।

स इति । अतिसौष्ठवेन अतिलाघवेन सायकान् शरान् क्षिपन् सोऽर्जुनः साध्वसेन विप्लुतानां भ्रान्तानां साध्वसविप्लुतानां परेषां द्विषां दोषेण रागादिना आवृतलोचनानां दुष्टचक्षुषां शशीव पृथग्विभिद्यमानः आबभासे । यथा सदोषचक्षुषा एकश्चन्द्रो नानेव लक्ष्यते तद्वत् एकोऽपि अनेक इव दृष्ट इति भावः ॥ २१ ॥

क्षोभेणेति । अथ गणाधिपानां सम्बन्धिना तेन क्षोभेण कम्पेन ईश्वरस्य आकृतिः आकारो मूर्त्तिः महाह्रदानां तरङ्गकम्पेन छायामयस्य प्रतिबिम्बरूपस्य दिनस्य भर्त्तुः दिवाकरस्य आकृतिरिव भेदं विकारं ययौ प्राप स्वयं निर्विकारोऽपि प्रतिसूर्य्यवत्परसंसर्गात्तथा प्रतीयत इत्यर्थः ॥ २२ ॥

यदि देवोऽपि विकृतस्तर्हि कोपः किं न कृतस्तत्राह ।

आकारवैषम्यमिदं च भेजे
दुर्लक्ष्यचिह्ना महतां हि वृत्तिः ॥ २३ ॥
विस्फार्य्यमाणस्य ततो भुजाभ्यां
भूतानि भर्त्रा धनुरन्तकस्य ।
भिन्नाकृतिं ज्यां ददृशुः स्फुरन्तीं
क्रुद्धस्य जिह्वामिव तक्षकस्य ॥ २४ ॥

प्रसेदिवांसमिति । प्रसेदिवांसम् अर्जुनं प्रति प्रसन्नचित्तं त देवं कोपो न आप न प्राप तत्रापि अनुग्रहं ययौ इति भावः । तत्र हेतुः परस्मिन् पुरुषे परात्मनि देवे स्वतो निर्विकारे इत्यर्थः । विकारः कोपरूपः कुतः न कुतश्चित् इत्यर्थः । ननु तस्य निर्विकारस्य कथं वहिः आकारभेदः कारणाभावादिति चेत् तत्र विद्म इत्याह । इदं पूर्वोक्तम् आकारवैषम्यं च भेजे किन्तु केनापि कारणेन न कुप्यति इत्यर्थः । ननु निर्विकारे कुत आकारभेदस्तत्राह । महतां वृत्तिश्चेष्टा दुर्लक्ष्यचिह्ना दुर्ग्रहहेतुका हि ॥ २३ ॥

विकारमेवाह । विस्फार्य्यमाणस्येति । ततोऽनन्तरं भूतानि भर्त्रा भूतपतिना भृजस्तृच्प्रत्ययः । अत एव "न लोक" इत्यादिना षष्ठीप्रतिषेधः । भुजाभ्याम् । कर्त्तृकरणयोः तृतीया । विस्फार्य्यमाणस्य आकृष्यमाणस्य धनुरन्तक इव तस्य धनुरन्तकस्य सम्बन्धिनीं स्फुरन्तीं चलन्तीम् अतएव भिन्ना द्विधा इव दृश्यमाना आकृतिः यस्याः तां ज्यां धनुर्गुणं क्रुद्धस्य तक्षकस्य नागविशेषस्य जिह्वामिव ददृशुः द्विधाभावात् भयङ्करत्वाच्च इति भावः ॥ २४ ॥

सव्यापसव्यध्वनितोग्रचापं
पार्थः किराताधिपमाशशङ्के ।
पर्य्यायसम्पादितकर्णतालं
यन्ता गजं व्यालमिवापराद्धः ॥ २५ ॥

निजघ्निरे तस्य हरेषुजालैः
पतन्ति वृन्दानि शिलीमुखानाम् ।
तेजस्विभिः सिन्धुमुखागतानि
यादांसि यादोभिरिवाम्बुराशेः ॥ २६ ॥

विभेदमन्तःपदवीनिरोधं
विध्वंसनं चाविदितप्रयोगः ।

सव्येति। पार्थः सव्यापसव्याभ्यां ध्वनितं नादितम् उग्रचापं येन तं किराताधिपम् अपराद्धः प्रमत्तो यन्ता पर्य्यायेण अयौगपद्येन सम्पादितं कर्णयोस्तालम् आस्फालनं येन तं व्यालं दुष्टम् "भेद्यलिङ्गः शठे व्यालः" इत्यमरः। गजमिवाशशङ्के तच्चापचातुर्य्यदर्शनात् दुर्जयः कोऽपि अयमनर्थकरश्च इति शङ्कितवान् इत्यर्थः ॥ २५ ॥

निजघ्निर इति। हरेषुजालैः तस्य अर्जुनस्य पतन्ति आगच्छन्ति शिली शल्यं मुखं येषां तेषां शिलीमुखानां शराणां वृन्दानि। तेजस्विभिः प्रबलैः अम्बुराशेः यादोभिः जलग्राहैः सिन्धुमुखेन नदीमुखेन आगतानि यादांसीव जलजन्तूनिव। "यादांसि जलजन्तवः" इति वैजयन्ती। निजघ्निरे हतानि ॥२६॥

विभेदमिति। अन्तर्विभेदं व्यूहविश्लेषणम् उपजापञ्च

नेतारिलोकेषु करोति यद्यत्
तत्तच्चकारास्य शरेषु शम्भुः॥ २७॥
सोढ़ावगीतप्रथमायुधस्य
क्रोधोज्झितैर्वेगितया पतद्भिः।
छिन्नैरपि त्रासितवाहिनीकैः
पेते कृतार्थैरिव तस्य बाणैः॥ २८॥
अलङ्कृतानामृजुतागुणेन
गुरूपदिष्टां गतिमास्थितानाम्।

पदवीनिरोधं मार्ग एव प्रतिबन्धनम् अन्यत्र तु आसारप्रसार-प्रतिबन्धं विध्वंसनं खण्डनं दुर्घटनदाहादिकञ्च इत्यादि यत् यत् नेता नायको जिगीषुः अविदितप्रयोगः संवृतमन्त्रत्वात् अविज्ञातोपायप्रयोगः सन् अरिलोकेषु शत्रुलोकेषु करोति। तत्तत् शम्भुः अविदितप्रयोगः अज्ञातसन्धानमोक्षादिकः सन् अस्य अर्जुनस्य शरेषु चकार कृतवान्। कर्त्तरि लिट्। श्लेषालङ्कारः॥ २७॥

सोढ़ेति। सोढ़ानि परैः अवगीतानि गर्हितानि प्रथमायुधानि पूर्वोत्सृष्टबाणाः यस्य तस्य अर्जुनस्य सम्बन्धिभिः क्रोधोज्झितैः क्रोधाभिषिक्तैः पूर्वबाणवैफल्यात् कोपेन त्यक्तैः। अत एव वेगितया वेगेन पतद्भिः। गतिं कुर्वद्भिः। अत एव छिन्नैः अपि त्रासिता वाहिन्यो यैः तैः अत एव कृतार्थैः इव बाणैः पेते। भावे लिट्। वस्तुतस्तु अकृतार्था एवेत्यर्थः॥ २८॥

अलमिति। ऋजुता अवक्राकारत्वम् अवक्रशीलत्वं च सैव गुणः तेन अलङ्कृतानां गुरुभिः धनुर्विद्यागुरुभिः धर्म-

सतामिवापर्वणि मार्गणानां
भङ्गः स जिष्णोर्धृतिमुन्ममाथ ॥ २९ ॥
बाणच्छिदस्ते विशिखाः स्मरारेः
अवाङ्मुखीभूतफलाः पतन्तः ।
अखण्डितं पाण्डवसायकेभ्यः
कृतस्य सद्यः प्रतिकारमापुः ॥ ३० ॥
चित्रीयमाणानतिलाघवेन
प्रमाथिनस्तान् भवमार्गणानाम् ।

शास्त्रगुरुभिश्च उपदिष्टां दर्शितां गतिं गमनम् आचारञ्च आस्थितानां प्राप्तानां मार्गणानां शराणां सतां साधूनाम् इव अपर्वणि अग्रन्थौ अन्यत्र अप्रस्तावे अकाण्ड इत्यर्थः। "पर्व स्यादुत्सवे ग्रन्थौ प्रस्तावे लक्षणान्तरे" इति विश्वः। स ईश्वरकृतो भङ्गः छेदो व्यसनञ्च जिष्णोः अर्जुनस्य कस्यचित् जित्वरस्य। "जिष्णुः शक्रे धनञ्जये जित्वरे" इति विश्वः। धृतिं धैर्य्यम् उन्ममाथ जहार इत्यर्थः। अकाण्डे साधुविपत्तिदर्शनात् इव शरभङ्गदर्शनात् धैर्य्यभङ्गोऽभूत् इत्यर्थः ॥ २९ ॥

बाणेति। बाणच्छिदः पार्थशरच्छेदिनस्ते स्मरारेः विशिखाः अवाङ्मुखीभूतफलाः विमुखाग्राः विफलाश्च सन्तः पतन्तः पाण्डवसायकेभ्यः। क्रियाग्रहणात् चतुर्थी। पाण्डवसायकानां कृतस्य फलभङ्गरूपस्य स्वकर्मणः सद्योऽखण्डितं प्रतिकारम् आपुः अत्युत्कटं कर्म सद्यः फलं दर्शयतीति भावः ॥ ३० ॥

पुनः अर्जुनस्य जयमाह। चित्रीयमाणानिति। अरातिः अर्जुनः अतिलाघवेन अतिशीघ्रत्वात् चित्रीयमाणान् चित्र-

शङ्काकुलाया निचखान दूरं
बाणान् ध्वजिन्या हृदयेष्वरातिः ३१ ॥
तस्यातियत्नादतिरिच्यमाने
पराक्रमेऽन्योन्यविशेषणेन ।
हन्ता पुरां भूरि पृषत्कवर्षं
निरास नैदाघ इवाम्बु मेघः ॥ ३२ ॥
अनाद्दृशन्तः क्वचिदेव मर्म
प्रियैषिणानुप्रहिताः शिवेन ।
सुहृत्प्रयुक्ता इव नर्मवादाः
शरा मुनेः प्रीतिकरा बभूवुः ॥ ३३ ॥

माश्चर्य्यं कुर्वाणान् "नमो वरिवश्चित्रङः क्यच्" भवमार्गणानां प्रमाथिनः खण्डयतः तान् वाणान्। शङ्काकुलायाः शङ्कलितायाः संक्षुभितायाः ध्वजिन्याः सेनायाः हृदयेषु दूरं गाढं निचखान निखातवान् ॥ ३१ ॥

तस्येति। तस्य अर्जुनस्य पराक्रमेऽतियत्नात् हेतोः अन्योन्यस्य विशेषणेन अतिशयकरणेन अतिरिच्यमाने अतिक्रम्यमाणे सति पुरां हन्ता त्रिपुरविजयी हरो भूरि प्रभूतं पृषत्कवर्षं बाणवर्षम्। "पृषत्कवाणविशिखाः" इत्यमरः। निदाघे भवो नैदाघो मेघोऽम्बुवाहोऽम्बु जलम् इव निरास मुमोच। अस्यतेर्लिट्। निदाघग्रहणं वर्षणस्य अतितीव्रत्वद्योतनार्थम् ॥ ३२ ॥

अनाघ्नन्त इति। प्रियैषिणा प्रियचिकीर्षुणा शिवेन

अस्त्रैः समानामतिरेकिणीं वा
पश्यन् रिपूणामपि तस्य शक्तिम्।
विषादवक्तव्यबलः प्रमाथी
स्वमाललम्बे बलमिन्दुमौलिः॥ ३४॥

ततस्तपोवीर्य्यसमुद्धतस्य
पारं यियासोः समरार्णवस्य।
महेषुजालान्यखिलानि जिष्णोः
अर्कः पयांसीव समाचचाम॥ ३५॥

अनुप्रहिताः प्रयुक्ताः अत एव क्वचित् एव मर्म अनाम्रशन्तोऽस्पृशन्तः ते शराः सुहृद्भिरिव सोऽपि प्रियैषी तेन प्रयुक्ताः उच्चारिताः नर्मवादाः प्रियवादा इव मुनेः अर्जुनस्य प्रीतिकराः प्रीतिजनका बभूवुः॥ ३३॥

अस्त्रैरिति। अस्त्रैः स्वायुधैः समानां तुल्यामतिरेकिणीं ततोऽधिकां वा तस्य मुनेः रिपूणाम् अपि शक्तिं पश्यन् विषादेन उत्साहभङ्गेन वक्तव्यानि निर्वाच्यानि बलानि यस्य सः प्रमाथी शत्रुमर्दनः इन्दुमौलिः महादेवः स्वं बलमात्मीयं बलमाललम्बे स्वसामर्थ्यम् अवलम्बितवान्॥ ३४॥

तत इति। ततो महिमप्रादुर्भावानन्तरं देवः तपोवीर्य्याभ्यां समुद्धतस्य प्रगल्भस्य समर एव अर्णवस्तस्य पारमन्तं यियासोः जिगमिषोः जिष्णोः अर्जुनस्य अखिलानि महेषुजालानि समग्रबाणसमूहान् अर्कः सूर्य्यः पयांसीव जलानीव समाचचाम संजहारेत्यर्थः॥ ३५॥

रिक्ते सविस्रम्भमथार्जुनस्य
निषङ्गवक्त्रे निपपात पाणिः।
अन्यद्विपापीतजले सतर्षं
मतङ्गजस्येव नगाश्मरन्ध्रे ॥३६॥

च्युते स तस्मिन्निषुधौ शरार्थात्
ध्वस्तार्थसारे सहसैव बन्धौ।
तत्कालमोघप्रणयः प्रपेदे
निर्व्याच्यताकाम इवाभिमुख्यम् ॥ ३७ ॥

रिक्त इति। अथ बाणान्तर्धानानन्तरम् अर्जुनस्य पाणिः करः रिक्ते बाणशून्येऽपि निषङ्गवक्त्रे तूणीरमुखे अन्यद्विपेन गजान्तरेण आपीतजले पीततोये नगस्य अचलस्य अश्मरन्ध्रे शिलागर्त्ते कन्दरे इत्यर्थः। सतर्षं सतृष्णं यथा स्यात्तथा इति क्रियाविशेषणम्। मतङ्गजस्य पाणिः लक्षणया कर इव सविस्रम्भं सन्ति एव बाणा इति सविश्वासं निपपात ॥ ३६ ॥

च्युत इति। शरा एव अर्थः धनं यस्य तस्मात् च्युते भ्रष्टे तस्मिन् इषुधौ निषङ्गे सहसा झटिति ध्वस्तार्थसारे अकाण्ड नष्टधनसारे बन्धौ इव तत्काले मोघः वितथः प्रणयः प्रीतिः यस्य सः प्रणयेन अर्थप्रार्थनात् पूर्वं कृतार्थ एव इति भावः। स पाणिः निर्व्याच्यतां कृतघ्नत्वात् अपवादराहित्यं कामयत इति निर्व्याच्यताकामः। शीलिकामिभक्ष्याचरिभ्यो णः। स इव इत्युत्प्रेक्षा। आभिमुख्यं प्रपेदे। यथा कश्चित् कृतज्ञः तत्कालानुपकृतम् अपि बन्धुं पूर्वोपकारस्मरणात् पुनः अनुबध्नाति महत् इत्यर्थः ॥ ३७ ॥

आघट्टयामास गतागताभ्यां
सावेगमग्राङ्गुलिरस्य तूणौ ।
विधेयमार्गे मतिरुत्सुकस्य
नयप्रयोगाविव गां जिगीषोः ॥ ३८ ॥
बभार शून्याकृतिरर्जुनस्तौ
महेषुधी वीतमहेषुजालौ ।
युगान्तसंशुष्कजलौ विजिह्मः
पूर्वापरौ लोक इवाम्बुराशी ॥ ३९ ॥

आघट्टयामासेति । अस्य मुनेः अग्रा चासौ अङ्गुलिश्च इति अग्राङ्गुलिः । "हस्ताग्राग्रहस्तयोर्गुणगुणिनोर्भेदात्" इति वामनः । विधेयमार्गे कर्त्तव्यान्वेषणे उत्सुकस्य प्रवृत्तस्य गां भुवं जिगीषोः नायकस्य मतिर्बुद्धिः नयः षाड्गुण्यः प्रयोगः उपायः तौ नयप्रयोगौ इव तूणौ निषङ्गौ सावेगं ससम्भ्रमम् । "इष्टानिष्टागमाज्ञानमावेगश्चित्तसम्भ्रम" इति शाश्वतः । गतागताभ्यां यातायाताभ्याम् आवापोद्वापाभ्यां च आघट्टयामास । अन्यत्र तु वितर्कयामास । शरग्रहणाय पुनः पुनः तूणयोः पाणिं व्यापारयामासेत्यर्थः ॥ ३८ ॥

बभारेति । शून्याकृतिः इष्टनाशात् निस्तेजस्करूपोऽर्जुनः तौ वीतमहेषुजालौ वीतानि रिक्तानि महेषुजालानि ययोः तौ महेषुधी महानिषङ्गौ विजिह्मः शून्यो लोको युगान्ते संशुष्कजलौ । "शुषः कः" इति निष्ठातकारस्य ककारः । पूर्वापरौ अम्बुराशी समुद्रौ इव बभार ॥ ३९ ॥

तेनानिमित्तेन तथा न पार्थः
तयोर्यथा रिक्ततयानुतेपे ।
स्वामापदं प्रोज्झ्य विपत्तिमग्नं
शोचन्ति सन्तो ह्युपकारिपक्षम् ॥ ४० ॥

प्रतिक्रियायै विधुरः स तस्मात्
कृच्छ्रेण विश्लेषमियाय हस्तः ।
पराङ्मुखत्वेऽपि कृतोपकारात् ।
तूणीमुखान्मित्रकुलादिवार्य्यः

पश्चात्क्रिया तूणयगस्य भर्त्तुः
जज्ञे तदानीमुपकारिणीव ।

तेनेति । पार्थः तयोः तूणयोः रिक्ततया हेतुना यथा अनुतेपे शुशोच तथा तेन अनिमित्तेन बाणक्षयेरूपेण दुर्निमित्तेन न शुशोच। तथाहि सन्तः स्वामापदं प्रोज्झ्य विसृज्य विपत्तिमग्नम् उपकारिणां पक्षं वर्गं शोचन्ति। स्वव्यसनापेक्षया परकीयव्यसनमेव सतामनुतापकम् इत्यर्थः ॥ ४० ॥

प्रतीति । प्रतिक्रियायै विधुरः प्रतिकर्त्तुम् असमर्थः । "तुमर्थाच्च भाववचनात्" इति चतुर्थी । अर्जुनस्य सः हस्तः पाणिः पराङ्मुखत्वेऽपि तत्कालवैमुख्येऽपि कृतोपकारात तस्मात् तूणीमुखात् मित्रकुलादार्य्यः साधुः कृतज्ञ इव । "आर्य्यः साधुकुलीनयोः" इति विश्वः। कृच्छ्रेण महाकष्टेन विश्लेषमियाय। गौरादित्वात् तूणशब्दात् ङीष् ॥ ४१ ॥

पश्चादिति। तदानीं भर्त्तुः स्वामिनः। कर्त्तरि षष्ठी।

सम्भावनायामधरीकृतायां
पत्युः पुरः साहसमासितव्यम् ॥ ४२ ॥

तं शम्भुराक्षिप्तमहेषुजालं
लौहैः शरैर्मर्मसु निस्तुतोद ।
हृतोत्तरं तत्त्वविचारमध्ये
वक्तेव दोषैर्गुरुभिर्विपक्षम् ॥ ४३ ॥

जहार चास्मादचिरेण वर्म
ज्वलन्मणिद्योतितहैमलेखम् ।
चण्डः पतङ्गान्मरुदेकनीलं
तडित्वतः खण्डमिवाम्बुदस्य ॥ ४४ ॥

पश्चात् क्रिया पृष्ठतः कारः तृणयुगस्य उपकारिणोव उपकारिकेव जज्ञे जाता । तथाहि । सम्भावनायां स्वयोग्यतायाम् अधरीकृतायाम् असफलीकृतायां पत्युः स्वामिनः पुरोऽग्रे आसितव्यमासस्थितम् । बहुलग्रहणाद्भावे तव्यप्रत्ययः । साहसं न याग्यम् । भर्त्रा सम्भावितस्य अवसरे अनुपकर्त्तुः अनुजीविनः तत्सम्मुख्यम् अनुचितमित्यर्थः ॥ ४२ ॥

तमिति । शम्भुः आक्षिप्तानि अपहृतानि महेषुजालानि यस्य तं मुनिं तत्त्वविचारमध्ये वादमध्ये हृतोत्तरं निरुत्तरीकृतं विपक्षं प्रतिवादिनं वक्ता वादो गुरुभिः दोषैः निग्रहस्थानैः इव लौहैः लोहमयैः शरैः मर्मसु निस्तुतोद व्यथयामास ॥ ४३ ॥

जहारेति । किञ्च अस्मात् मुनेः अचिरेण शीघ्रं ज्वलद्भिः मणिभिः द्योतितः हैम्यः सौवर्ण्यः लेखाः यस्य तत् तथोक्तम् ।

विकोशनिर्धूततनोर्महासेः
फणावतस्त्वचि विच्युतायाम्।
प्रतिद्विपाबद्धरुषः समक्षं
नागस्य चाक्षिप्तमुखच्छदस्य॥ ४५॥
विबोधितस्य ध्वनिना घनानां
हरेरपेतस्य च शैलरन्ध्रात्।
निरस्तधूमस्य च रात्रिवह्नेः
विना तनुत्रेण रुचिं स भेजे॥ ४६॥

युग्मकम्।

वर्म कवचं चण्डो मरुत् पवनः पतङ्गात् सूर्यात् एकं केवलं कनकवर्णम्। "एके मुख्यान्यकेवलाः" इत्यमरः। तडित्वतः तडिद्युक्तस्य अम्बुदस्य खण्डमिव जहार। तदा भगवन्मायया मुक्तकञ्चुको मुनिः मेघनिर्मुक्तः सूर्य इव दिदीपे इति भावः॥ ४४॥

अथ युग्मेनाह। विकोशेति। सोऽर्जुनः तनुं त्रायत इति तनुत्रं वर्म। "आतोऽनुपसर्गे कः" इति कप्रत्ययः। तेन विना विकोशः कोशादुद्धृतः निर्धूततनुः बाणोल्लीढमूर्त्तिः। ततो विशेषणसमासः। तस्य विकोशनिर्धूततनोः महासेः महाखड्गस्य तथा त्वचि विच्युतायां सत्यां फणावतस्य मुक्तकञ्चुकस्य अहेश्च प्रतिद्विपे प्रतिगजे आबद्धरुषो बद्धकोपस्य समक्षं प्रतिगजस्य अग्रे आक्षिप्तमुखच्छदस्य निरस्तमुखावरणस्य नागस्य गजस्य च॥ ४५॥

विबोधितस्येति। घनानां ध्वनिना गर्जितेन विबोधितस्य

अचित्ततायामपि नाम युक्ताम्
अनूर्ध्वतां प्राप्य तदीयकृच्छ्रे ।
मह्यीं गतौ ताविषुधी तदानीं
विवव्रतुश्चेतनयेव योगम् ॥ ४७ ॥

स्थितं विशुद्धे नभसीव सत्त्वे ।
धाम्ना तपोवीर्य्यमयेन युक्तम् ।
शस्त्राभिघातैस्तमजस्रमीशः
त्वष्टा विवस्वन्तमिवोल्लिलेख ॥ ४८ ॥

शैलरन्ध्रात् कन्दरात् अपेतस्य निष्क्रान्तस्य हरेः सिंहस्य च तथा निरस्तधूमस्य रात्रिवह्नेश्च रुचिं शोभां भेजे । एतेन अस्य तीक्ष्णता वैरनिर्यातनत्वरणदुर्मदत्वमनस्वित्वतेजस्वित्वानि उक्तानि । अत्र रुचिमिव रुचिमिति सादृश्याक्षेपात् असम्भ-वद्वस्तुसम्बन्धो निदर्शनालङ्कारो मालया संसृष्टः ॥ ४६ ॥

अचित्ततायामिति । तदानीं कवचपतनसमये मह्यीं गतौ इषुधी निषङ्गौ अचित्ततायामपि अचेतनत्वेऽपि तदीयकृच्छ्रे स्वामिव्यसने युक्तां योग्याम् नाम किल अकिञ्चित्करत्वादिति भावः । अनूर्ध्वताम् अवाङ्मुखत्वं प्राप्य चेतनया प्राणिसाधारण-ज्ञानेनेव योगं चैतन्यसम्बन्धं विवव्रतुः इवेत्युत्प्रेक्षा । अचेतनत्वे अवाङ्मुखत्वादिचेतनधर्मयोगात् इति भावः ॥ ४७ ॥

स्थितमिति । विशुद्धे निर्मले नभसि इव सत्त्वे सत्त्वगुणे स्थितं तपोवीर्य्यमयेन तपोवीर्य्याभ्यां गतेन धाम्ना तेजसा युक्तं तम् अर्जुनम् ईशः त्वष्टा विश्वकर्मा विवस्वन्तमिव अजस्रं शस्त्राभिघातैः शस्त्रकर्षणैः उल्लिलेख ततक्ष ॥ ४८ ॥

संरम्भवेगोज्झितवेदनेषु
गात्रेषु चाधैर्य्यमुपागतेषु ।
मुनेर्बभूवागणितेषुराशेः
लोहस्तिरस्कार इवात्ममन्युः ॥ ४९ ॥

ततोऽनुपूर्वायतवृत्तबाहुः
श्रीमान् क्षरल्लोहितदिग्धदेहः ।
आस्कन्द्य वेगेन विमुक्तनादः
क्षितिं विधुन्वन्निव पार्ष्णिघातैः ॥ ५० ॥

संरम्भेति संरम्भवेगेन सम्भ्रमातिशयेन उज्झितवेदनेषु त्यक्तदुःखेषु गात्रेषु च अधैर्य्यं स्तैमित्यम् उपागतेषु सत्सु न गणिताः इषुराशयो येन तस्य अगणितेषुराशेः मुनेः अर्जुनस्य आत्ममन्युः स्वकोपो लोहस्य विकारो लौहः कार्ष्णायसः तिरस्क्रियते आच्छाद्यतेऽनेनेति तिरस्कारः कञ्चुक इव बभूव । रोषवशात् न किञ्चित् प्रहारदुःखमज्ञासीदित्यर्थः । क्रोधैकवर्मणां वीराणां किमन्यैः लोहभारैः ? इत्यर्थः ॥ ४९ ॥

अथ युग्मेन आह । तत इति । ततोऽनन्तरम् अनुपूर्वौ पूर्वमनुगतौ गोपुच्छाकारौ आयतौ दीर्घौ वृत्तौ वर्त्तुलौ बाहू यस्य सः श्रीमान् शोभावान् क्षरल्लोहितदिग्धदेहः स्रवद्रुधिरलिप्तगात्रः पार्ष्णिघातैः चरणतलाघातैः । "तद्ग्रन्थी घुटिके गुल्फौ स्त्रियां पार्ष्णिरधस्तयोः" इत्यमरः । क्षितिं विधुन्वन् प्रकम्पयन् इव वेगेन आस्कन्द्य अभिद्रुत्य विमुक्तनादः सोऽर्जुनः ॥ ५० ॥

साम्यं गतेनाशनिना मघोनः
शशाङ्कखण्डाकृतिपाण्डुरेण ।
शम्भुं बिभित्सुर्धनुषा जघान
स्तम्बं विषाणेन महानिवेभः ॥ ५१ ॥
युग्मम् ।

रयेण सा सन्निदधे पतन्ती
भवोद्भवेनात्मनि चापयष्टिः ।
समुद्धता सिन्धुरनेकमार्गा
परे स्थितेनौजसि जह्नुनेव ॥ ५२ ॥

विकार्मुकः कर्मसु शोचनीयः
परिच्युतौदार्य्य इवोपचारः ।

साम्यमिति । मघोनः इन्द्रस्य अशनिना वज्रेण सह साम्यं गतेन वज्रकल्पेन शशाङ्कस्य खण्डं शकलं तस्य इव आकृतिः यस्य तद्वद्वक्रमित्यर्थः । पाण्डुरश्च तद्वदेवेति भावः । तेन शशाङ्कखण्डाकृतिपाण्डुरेण धनुषा शम्भुं बिभित्सुः भेत्तुमिच्छुः सन् महानिभो गजः विषाणेन दन्तेन स्तम्बमिव जघान ॥५१॥

रयेणेति । रयेण वेगेन पतन्ती सा चापयष्टिः भवस्य संसारस्य उद्भवः उत्पत्तिः यस्मात् तेन भवोद्भवेन ईश्वरेण परे ओजसि परमे ज्योतिषि स्थितेन जह्नुना राजर्षिणा समुद्धता अत्युत्कटा अनेकमार्गा त्रिस्रोताः सिन्धुः गङ्गा इव आत्मनि, सन्निदधे सम्यक् निहिता अन्तर्निहितेत्यर्थः ॥ ५२ ॥

विकार्मुक इति । विकार्मुको भग्नचापः अत एव परि-

विचिक्षिपे शूलभृता सलीलं
स पत्रिभिर्दूरमदूरपातैः ॥ ५३ ॥

उपोढकल्याणफलोऽभिरक्षन्
वीरव्रतं पुण्यरणाश्रमस्थः ।
जपोपवासैरिव संयतात्मा
तेपे मुनिस्तैरिषुभिः शिवस्य ॥ ५४ ॥

ततोऽग्रभूमिं व्यवसायसिद्धेः
सीमानमन्यैरतिदुस्तरं सः ।
तेजःश्रियामाश्रयमुत्तमासिं
साक्षादहङ्कारमिवाललम्बे ॥ ५५ ॥

च्युतौदार्य्यो दानवर्जित उपचारः सत्कार इव कर्मसु रण-क्रियासु कृत्येषु च शोचनीयः शोच्योऽपूज्यश्च सत्त्वावष्टम्भनात् भग्नचित्तत्वाच्च सोऽर्जुनः शूलभृता शिवेन सलीलं यथा तथा अदूरपातैः अतिगाढप्रहारैः पत्रिभिः शरैः दूरम् अत्यन्तं विचिक्षिपे नुन्नः ॥ ५३ ॥

उपोढेति । उपोढमासन्नं कल्याणफलम् अस्त्रलाभरूपं स्वर्गादिकञ्च यस्य सः वीरव्रतमाहवादनिवृत्तिरूपं तीव्रं तपश्च अभिरक्षन् पलायमानः पुण्यो यो रण एव आश्रमः तत्र तिष्ठति इति पुण्यरणाश्रमस्थः संयतात्मा नियमितचित्तः मुनिः अर्जुनः कश्चित्तपस्वी च तैः शिवस्य महादेवस्य इषुभिः शरैः जपोपवासैः इव तेपे तप्तः । तपतेः कर्मणि लिट् ॥ ५४ ॥

तत इति । ततः चापालम्बनानन्तरं सोऽर्जुनः अग्रभूमिं

शरानवद्यन्ननवद्यकर्मा
चचार चित्रं प्रविचारमार्गैः।
हस्तेन निस्त्रिंशभृता स दीप्तः
सार्कांशुना वारिधिरूर्मिणेव ॥ ५६ ॥

यथा निजे वर्त्मनि भाति भाभिः
छायामयश्चाप्सु सहस्ररश्मिः।
तथा भ्रमन्नाशु रणस्थलीषु
स्पष्टद्विमूर्त्तिर्ददृशे स भूतैः ॥ ५७ ॥

विपदि गन्तव्यस्थानं शरणम् इत्यर्थः। कुतः व्यवसायसिद्धैः युद्धाद्यागसिद्धैः सीमानम् अवधिं साधकतमम् इत्यर्थः। अन्यैः परैः अतिदुस्तरं दुरतिक्रमं तेजःश्रियां प्रतापसम्पदाम् आश्रयं हेतुम् इत्यर्थः। उत्तमासिं महाखड्गम्। "सन्महत्" इत्यादिना समासः। साक्षादहङ्कारं सविग्रहम् अभिमानं इव आललम्बे जग्राह ॥ ५५ ॥

शरानिति। अनवद्यकर्मा अगर्ह्यकर्मा। "अवद्यपण्य" इत्यादिना निपातः। शरान् अवद्यन् खण्डयन् वीरो निस्त्रिंशभृता खड्गयुक्तेन हस्तेन सार्कांशुना अर्कांशुसहितेन ऊर्मिणा तरङ्गेण वारिधिरिव दीप्तः दापितः सोऽर्जुनः प्रविचारमार्गैः खड्गिनां गतिभेदैश्चित्रं यथा तथा चचार ॥ ५६ ॥

यथेति। भाभिः दीप्तिभिः उपलक्षितः। "स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युतिदीप्तयः" इत्यमरः। सहस्ररश्मिः अर्कः यथा निजे वर्त्मनि नभसि छायामयः प्रतिविम्बरूपः सन् अप्सु भाति रणस्थलीषु च स्पष्टे द्वे मूर्त्ती यस्य स स्पष्टद्विमूर्त्तिः सन्

शिवप्रणुन्नेन शिलीमुखेन
त्सरुप्रदेशादपवर्जिताङ्गः ।
ज्वलन्नसिस्तस्य पपात पाणेः
घनस्य वप्रादिव वैद्युतोऽग्निः ॥ ५८ ॥

आक्षिप्तचापावरणेषुजालः
छिन्नोत्तमासिः स मृधेऽवधूतः ।
रिक्तः प्रकाशश्च बभूव भूमेः
उत्सादितोद्यान इव प्रदेशः ॥५९॥

सोऽर्जुनः भ्रमन् तथा भूतैः गणैः ददृशे दृष्टः। यथैकोऽर्कः नभसि अप्सु च अनेक इव दृश्यते। तथा सोऽपि दिवि भुवि च अप्सु सञ्चारात् यौगपद्यभ्रमात् एव एकोऽपि अनेक इव गणैः दृष्ट इत्युत्प्रेक्षा ॥ ५७ ॥

शिवेति। शिवेन प्रणुन्नः क्षिप्तः तेन शिलीमुखेन त्सरुप्रदेशात् मुष्टिप्रदेशम् अवधिं कृत्वा "त्सरुः खड्गादिमुष्टौ स्यात्" इत्यमरः। अपवर्जिताङ्गः लूनविग्रहः असिः खड्गः तस्य अर्जुनस्य पाणेः करात् घनस्य मेघस्य वप्रात् तटात् वैद्युतो विद्युत्सम्बन्धी अग्निः इव ज्वलन् पपात ॥ ५८ ॥

आक्षिप्तेति। आक्षिप्तानि अपहृतानि चापावरणेषुजालानि धनुर्वर्मबाणसमूहा यस्य सः छिन्नोत्तमासिः लूनमहाखड्गः मृधे रणे। "मृधमास्कन्दनं सङ्ग्रामः" इत्यमरः। अवधूता निरस्तः सोऽर्जुनः उत्सादितम् उत्पाटितम् उद्यानं यस्य सः भूमेः प्रदेशो भूमिभाग इव रिक्तः शून्यः प्रकाशो निःसम्बन्धश्च बभूव ॥ ५९ ॥

स खण्डनां प्राप्य पराद्मर्षवान्
भुजद्वितीयोऽपि विजेतुमिच्छया ।
ससर्ज वृष्टिं परिरुग्णपादपां
द्रवेतरेषां पयसामिवाश्मनाम् ॥ ६० ॥

नीरन्ध्रं परिगमिते क्षयं पृषत्कैः
भूतानामधिपतिना शिलावितानै ।
उच्छ्रायस्थगितनभो दिगन्तरालं
चिक्षेप क्षितिरुहजालमिन्द्रसूनुः ॥ ६१ ॥

निःशेषं शकलितवल्कलाङ्गसारैः

स इति । परात् परस्मात् शत्रोः । "पूर्वादिभ्यो नवभ्यो वा" इति विकल्पात् न स्मादादेशः । खण्डनां भङ्गं प्राप्य अमर्षवान् सोऽर्जुनः भुजद्वितीयो भुजमात्रसहायः सन् अपि विजेतुम् इच्छया द्रवेभ्यः इतराणि तेषां द्रवेतरेषां कठिनानां पयसाम् इव करकाणाम् इवेत्यर्थः । अश्मनां सम्बन्धिनीं परिरुग्णा भग्नाः पादपाः यस्याः सा तां वृष्टिं ससर्ज अश्मभिः जघान इत्यर्थः ॥ ६० ॥

नीरन्ध्रमिति । शिलावितानै शिलाजाले भूतानाम् अधिपतिना शिवेन पृषत्कैः वाणैः क्षयं परिगमिते नीते सति इन्द्रसूनुः अर्जुनः उच्छ्रायेण उत्सेधेन स्थगितम् आच्छादितं नभो दिशाम् अन्तरालञ्च येन तत् नीरन्ध्रं सान्द्रं रोहन्तीति रुहाः । इगुपधलक्षणः कप्रत्ययः । क्षितौ रुहा वृक्षास्तेषां जालं चिक्षेप प्रेरयामास "उच्छ्रायं गमितवतो" इति प्रामादिकः पाठः ॥ ६१ ॥

निःशेषमिति । ईशानः शिवः । शानच्प्रत्ययः । निःशेषं

कुर्वद्भिर्भुवमभितः कषायचित्राम्।
ईशानः सकुसुमपल्लवैर्नगैस्तैः
आतेने बलिमिव रङ्गदेवताभ्यः॥ ६२॥

उन्मज्जन् मकर इवामरापगाया
वेगेन प्रतिमुखमेत्य बाणनद्याः।
गाण्डीवी कनकशिलानिभं भुजाभ्याम्
आजघ्ने विषमविलोचनस्य वक्षः॥ ६३॥

यथा तथा शकलितानि वल्कलानि त्वचः अङ्गानि शाखाः सारो मज्जा च येषां तैः भुवम् अभितः कषायो यो रागः स्वरागेण रञ्जनम् इति यावत्। "रागे क्वाथे कषायोऽस्त्री" इति वैजयन्ती। तेन चित्रां विचित्रवर्णां कुर्वद्भिः सकुसुमपल्लवैः तैः नगैः वृक्षैः रङ्गे रणरङ्गे या देवताः ताभ्यो बलिं पूजाम् इव आतेने॥ ६२॥

उन्मज्जन्निति। गाण्डीवी अर्जुनः उन्मज्जन् उत्तरन् मकरो जलग्राहविशेषः अमरापगाया इव बाणनद्याः बाणप्रवाहात् वेगेन प्रतिमुखम् अभिमुखम् एत्य आगत्य कनकशिलानिभं कनकग्रहणं काठिन्यातिशयद्योतनार्थम्। विषमविलोचनस्य त्र्यम्बकस्य वक्षः हृदयं भुजाभ्याम् आजघ्ने ताडितवान्। अत्र आत्मनेपदं विचार्यम् "आङो यमहनः" इत्यत्र अकर्मकाधिकारात् "स्वाङ्गकर्मकाच्च" इति वक्तव्यत्वात् न च शिवस्य प्रतिमुखम् इत्यन्वयात् कनकशिलानिभं कनकनिकषतुल्यं श्यामं स्ववक्षः आजघ्ने इत्यर्थः इति वाच्यम्। अनौचित्याचरणात् न हि युद्धाय सन्नद्धा निपुणा अपि मल्लाः स्ववक्षस्ताडनम् आच-

अभिलषत उपायं विक्रमं कीर्त्तिलक्ष्म्यो:
असुगममरिसैन्यैरङ्कमभ्यागतस्य ।
जनक इव शिशुत्वे सुप्रियस्यैकसूनो:
अविनयमपि सेहे पाण्डवस्य स्मरारि: ॥६४॥

इति किरातार्जुनीये महाकाव्ये
सप्तदश: सर्ग: ॥ १७ ॥

र्न्ति किन्तु स्वभुजास्फालनन्। किञ्च अनन्तरं वक्ष्यमाणभव-कर्त्तृकाविनयमहनविरोधात् वक्ष एव इत्यन्वयस्य अव्यवधा-नाच्च पूर्वै: एव दूषितत्वात् अतो व्याकरणान्तरात् द्रष्टव्यम्। केचित्तु "त्र्यम्बकस्य वक्ष: प्राप्य" इत्यध्याहारं स्वीकृत्य अक-र्मकत्वात् आत्मनेपदमाहु: ॥ ६३ ॥

अभिलषत इति। कीर्त्तिलक्ष्म्योरुपायं साधनभूतम् अरि-सैन्यै: असुगमं दुरासदं विक्रमम् अभिलषत:। सूनुपक्षे यत्किञ्चिन्महत् फलं प्रार्थयमानस्य इत्यर्थ:। अत एव अङ्कम् अन्तिकम् अभ्यागतस्य उत्सङ्गमारूढस्य च पाण्डवस्य अवि-नयं स्मरारि: अनेन भक्तवात्सल्यम् एव सहनकारणम् इति सूच्यते। शिशुत्वे शैशवे सुप्रियस्य परमप्रेमास्पदस्य कुत: एक एव सूनु: तस्य एकसूनो: अविनयं जनक इव सेहे सोढ़वान् ॥ ६४ ॥

इति श्रीमहामहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
किरातार्जुनीयव्याख्यायां घण्टापथे
सप्तदश: सर्ग: ।

## अष्टादशः सर्गः ।



तत उदग्र इव द्विरदे मुनौ
रणमुपेयुषि भीमभुजायुधे ।
धनुरपास्य सबाणधि शङ्करः
प्रतिजघान घनैरिव मुष्टिभिः ॥ १ ॥
हरपृथासुतयोर्ध्वनिरुत्पतन्
अमृदुसंवलिताङ्गुलिपाणिजः ।
स्फुटदनल्पशिलारवदारुणः
प्रतिननाद दरीषु दरीभृतः ॥ २ ॥

तत इति । ततो मुनिमुष्टियुद्धानन्तरम् उदग्रे महति द्विरदे गजे इव भीमे भुजौ एव आयुधे यस्य तथाभूते रणमुपेयुषि मुनौ शङ्करः स्वयमपि सबाणधि सतूणं धनुः अपास्य त्यक्त्वा मुष्टिभिः घनैः लौहमुद्गरैः इव प्रतिजघान । प्राङ्मुनिकृताघातस्य प्रतिघातं कृतवान् इत्यर्थः । "घनाः कठिनसङ्घातमेघकाठिन्यमुद्गराः" इति वैजयन्ती । "घनस्तु लौहमद्गरे" इति विश्वः । यद्यपि मुष्टिशब्दः "मुष्ट्या तु बद्धया सरत्निः स्यादरत्निस्तु निष्कनिष्ठेन मुष्टिना" इत्यमरः उभयथा प्रयोगाद् द्विलिङ्गः तथापि अत्र उपमानसारूप्यात् पुंलिङ्गो ग्राह्यः । द्रुतविलम्बितं वृत्तम् ॥ १ ॥

हरेति । हरपृथासुतयोः अमृदु निविडं यथा तथा संवलिताः सङ्घट्टिताः अङ्गुलयो येषां ते मुष्टीकृता इत्यर्थः । तैषु

शिवभुजाहतिभिन्नपृथुक्षतीः
सुखमिवानुबभूव कपिध्वजः।
क इव नाम बृहन्मनसां भवेत्
अनुकृतेरपि सत्त्ववतां क्षमः॥ ३॥

व्रणमुखच्युतशोणितशीकर-
स्थगितशैलतटाभभुजान्तरः।
अभिनवौषसरागभृता बभौ
जलधरेण समानमुमापतिः॥ ४॥

प्राणिषु जातः तथोक्तः। स्फुटन्तीनां विदलन्तीनाम् अनल्प-शिलानाम् आरव इव दारुणो भीषणो ध्वनिः उत्पतन् उद्गच्छन्। दरीभृतो गिरिः दरीषु गुहासु प्रतिननाद प्रतिदध्वान॥ २॥

शिवेति। कपिध्वजः शिवस्य भुजाहतिभिः मुष्टिघातैः भिन्ना विदीर्णाः याः पृथवो महत्यः क्षतयः प्रहाराः व्रणास्ताः सुखमिव अनुबभूव। दुःखकरीरपि इति भावः। क्षतीर्दुःख-माजीगणदित्यर्थः। ननु दुःसहदुःखवेगेषु कथम् अगणना? इत्य-त्राह। क इति। क इव नाम को नु खलु सत्त्ववतां सत्त्वाधि-कानां बृहन्मनसां तेजस्विनाम् अनुकृतेः अनुकरणस्य अपि क्षमो भवेत्। मनस्विनां चरितं नटवदनुकर्त्तुमपि न कश्चि-दीष्टे तस्य आचरणं तु दूरापास्तम्। रौद्ररसाविष्टमनस्विनां कुतः सुखगणना? इति भावः॥ ३॥

व्रणेति। व्रणमुखेभ्यः च्युतस्य क्षरितस्य शोणितस्य शीकरैः स्थगितमावृतं शैलतटाभं शिलाभं भुजान्तरं वक्षो यस्य स तथोक्तः उमापतिः अभिनवम् औषसरागं सन्ध्यारागं बिभर्त्तीति

## अष्टादशः सर्गः ।

---

तत उदग्र इव द्विरदे मुनौ
रणमुपेयुषि भीमभुजायुधे ।
धनुरपास्य सबाणधि शङ्करः
प्रतिजघान घनैरिव मुष्टिभिः ॥ १ ॥

हरपृथासुतयोर्ध्वनिरुत्पतन्
अमृदुसंवलिताङ्गुलिपाणिजः ।
स्फुटदनल्पशिलारवदारुणः
प्रतिननाद दरीषु दरीभृतः ॥ २ ॥

तत इति । ततो मुनिमुष्टियुद्धानन्तरम् उदग्रे महति द्विरदे गजे इव भीमौ भुजौ एव आयुधे यस्य तथाभूते रणमुपेयुषि मुनौ शङ्करः स्वयमपि सबाणधि सतूणं धनुः अपास्य त्यक्त्वा मुष्टिभिः घनैः लौहमुद्गरैः इव प्रतिजघान । प्राक् निकृताघातस्य प्रतिघातं कृतवान् इत्यर्थः । "घनाः कठिनसङ्घातमेघकाठिन्यमुद्गराः" इति वैजयन्ती । "घनस्तु लौहमुद्गरे" इति विश्वः । यद्यपि मुष्टिशब्दः "मुष्ट्या तु बद्धया सरत्निः स्यादरत्निस्तु निष्कनिष्ठेन मुष्टिना" इत्यमरः उभयथा प्रयोगात् द्विलिङ्गः तथापि अत्र उपमानसारूप्यात् पुंलिङ्गो ग्राह्यः । द्रुतविलम्बितं वृत्तम् ॥ १ ॥

हरेति । हरपृथासुतयोः अमृदु निविडं यथा तथा संवलिताः सङ्कुचिताः अङ्गुलयो येषां ते मुष्टीकृता इत्यर्थः । तेषु

शिवभुजाहतिभिन्नपृथुक्षतीः
सुखमिवानुबभूव कपिध्वजः।
क इव नाम बृहन्मनसां भवेत्
अनुकृतेरपि सत्त्ववतां क्षमः॥ ३॥
व्रणमुखच्युतशोणितशीकर-
स्थगितशैलतटाभभुजान्तरः।
अभिनवौषसरागभृता बभौ
जलधरेण समानमुमापतिः॥ ४॥

पाणिषु जातः तथोक्तः। स्फुटन्तीनां विदलन्तीनाम् अनल्प शिलानाम् आरव इव दारुणो भीषणो ध्वनिः उत्पतन् उद्गच्छन्। दरीभृतो गिरेः दरीषु गुहासु प्रतिननाद प्रतिदध्वान॥ २॥

शिवेति। कपिध्वजः शिवस्य भुजाहतिभिः मुष्टिघातैः भिन्ना विदीर्णाः याः पृथवो महत्यः क्षतयः प्रहाराः व्रणास्ताः सुखमिव अनुबभूव। दुःखकरीरपि इति भावः। क्षतीर्दुःख भाजोगणदित्यर्थः। ननु दुःसहदुःखवेगेषु कथम् अगणना? इत्य त्राह। क इति। क इव नाम को नु खलु सत्त्ववतां सत्त्वाधि कानां बृहन्मनसां तेजस्विनाम् अनुकृतेः अनुकरणस्य अपि क्षमो भवेत्। मनस्विनां चरितं नटवदनुकर्त्तुमपि न कश्चि-दीष्टे तस्य आचरणं तु दूरापास्तम्। रौद्ररसाविष्टमनस्विनां कुतः सुखगणना? इति भावः॥ ३॥

व्रणेति। व्रणमुखेभ्यः च्युतस्य क्षरितस्य शोणितस्य शीकरैः स्थगितमावृतं शैलतटाभं शिलाभं भुजान्तरं वक्षो यस्य स तथोक्तः उमापतिः अभिनवम् औषसरागं सन्ध्यारागं बिभर्त्तीति

उरसि शूलभृतः प्रहिता मुहुः
प्रतिहतिं ययुरर्जुनमुष्टयः ।
भृशरया इव सह्यमहीभृतः
पृथुनि रोधसि सिन्धुमहोर्मयः ॥ ५ ॥

निपतितेऽधिशिरोधरमायते
सममरत्नियुगेऽयुगचक्षुषः ।
त्रिचतुरेषु पदेषु किरीटिना
लुलितदृष्टि मदादिव चस्खले ॥ ६ ॥

यथोक्तेन जलधरेण समानं तुल्यं यथा तथा बभौ इत्युपमा ॥४॥

उरसीति । शूलभृतः शिवस्य उरसि प्रहिताः प्रयुक्ताः अर्जुनस्य मुष्टयः पृथुनि विशाले सह्यमहीभृतः सह्याद्रेः रोधसि तटे भृशरयाः तीव्रवेगाः सिन्धोः समुद्रस्य महोर्मय इव मुहुः प्रतिहतिं ययुः ॥ ५ ॥

निपतित इति । अयुगानि चक्षूंषि यस्य तस्य अयुगचक्षुषः त्रिलोचनस्य आयते दीर्घे अरत्नियुगे अरत्न्योः बद्धमुष्ट्योर्हस्तयोः युगे युग्मे । "मुष्ट्या तु बद्धया सरत्निः स्यादरत्निस्तु निष्कनिष्ठेन मुष्टिना" इत्यमरः । प्रकृते तु मुष्टिमात्रविवक्षया प्रयोगः । शिरोधरायामधीति अधिशिरोधरम् अधिकन्धरं समं युगपत् निपतिते सति । किरीटिना अर्जुनेन मदादिव त्रीणि चत्वारि वा त्रिचतुराणि । "सङ्ख्ययाव्ययासन्न" इत्यादिना बहुव्रीहिः । "चतुरोऽच्प्रकरणे त्र्युपाभ्यामुपसंख्यानम्" इति समासान्तः अच्प्रत्ययः । त्रिचतुरेषु पदेषु लुलितदृष्टि घूर्णितनेत्रं यथा तथा चस्खले स्खलितम् । भावे लिट् ॥६॥

अभिभवोदितमन्युविदीपितः
समभिसृत्य भृशं जवमोजसा।
भुजयुगेन विभज्य समाददे
शशिकलाभरणस्य भुजद्वयम्॥ ७॥

प्रववृतेऽथ महाहवमल्लयोः
अचलसञ्चलनाहरणो रणः।
करणशृङ्खलसङ्कलनागुरुः
गुरुभुजायुधगर्वितयास्तयाः॥ ८॥

अयमसौ भगवानुत पाण्डवः
स्थितमवाङ्मुनिना शशिमौलिना।

अभिभवेति। अभिभवेन तत्कृतेण उदितः उत्पन्नो यो मन्युः क्रोधः तेन विदीपितः प्रज्वलितः सः अर्जुनः भृशं जवं समभिसृत्य समभिद्रुत्य ओजसा बलेन शशिकलाभरणस्य इन्दुमौलेः शिवस्य भुजद्वयं भुजयुगेन विभज्य वियोज्य समाददे जग्राह॥७॥

प्रववृत इति। अथ महाहवे महारणे मल्लयोः बलीयसोः। "मल्लः पात्रे कपोले च मत्स्यभेदे बलीयसि" इति विश्वः। गुरुभुजौ एव आयुधं तेन गर्वितयोः तयोः शिवार्जुनयोः करणानि करचरणबन्धनानि एव शृङ्खलानि येषां तेषां सङ्कलना सङ्घट्टना तया गुरुः दुस्तरः तथा अचलस्य हिमाद्रेः सञ्चलनं कम्पः तस्य आहरणः आरोपकः। कर्त्तरि ल्युट्। रणः प्रववृते प्रावर्त्तत॥८॥

समधिरूढमजेन नु जिष्णुना
स्विदिति वेगवशान्मुमुहे गणैः ॥ ९ ॥

प्रचलिते चलितं स्थितमास्थिते
विनमिते नतमुन्नतमुन्नतौ।
वृषकपिध्वजयोरसहिष्णुना
मुहुरभावभयादिव भूभृता ॥ १० ॥

करणशृङ्खलनिःसृतयोस्तयोः
कृतभुजध्वनि वल्गु विवल्गतोः।

अयमिति। अयं पुरोवर्त्ती पुमान् असौ भगवान् प्रसिद्धः देवः। तदुक्तम् "इदमः प्रत्यक्षरूपं समीपतरवर्त्ति चैतदो रूपम्। अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात्" इति उत पाण्डवः अयं हि तिष्ठदवस्थायां भ्रम इति वेदितव्यम्। अथ पतनावस्थायामाह—मुनिना अवाक् अधःस्थितम् उत शशिमौलिना अजेन देवेन नु समधिरूढम् उपरिस्थितम् अथ जिष्णुना स्वित् अर्जुनेन वा समधिरूढमित्येवं गणैः वेगवशात् मुमुहे भ्रान्तम्। "मुहवैचित्त्ये" भावे लिट् ॥९॥

प्रचलिते इति। असहिष्णुना तयोः भारमसहमानेन भूभृता शैलेन अभावभयात् विनाशभयात् इव मुहुः वृषश्च कपिश्च ध्वजे ययोस्तयोः वृषकपिध्वजयोः प्रचलिते चलने सति चलित प्रचेले आस्थिते तूष्णीम् अवस्थाने स्थितं तथैव तस्थे। विनमिते सति सम्यगाक्रमणे सति नतं नम्रीभूतम् अनामीति यावत्। उन्नतौ उन्नमते सति उन्नतम् उदनामि। सर्वत्र भावे क्तः ॥१०॥

करणेति। करणानि करचरणबन्धविशेषाः तान्येव शृङ्ख-

चरणपातनिपातितरोधस:
प्रससृपु: सरित: परित: स्थलो: ॥ ११ ॥
वियति वेगपरिप्लुतमन्तरा
समभिसृत्य रयेण कपिध्वज:।
चरणयोश्चरणानमितक्षिति:
निजगृहे तिसृणां जयिनं पुराम् ॥ १२ ॥
विस्मित: सपदि तेन कर्मणा
कर्मणां क्षयकर: पर: पुमान्।

नानि ताभ्यो नि:सृतयो: मुहु: त्यक्तबन्धयो: इत्यर्थ:। कृतो भुज-ध्वनि: भुजास्फोटनशब्दो यस्मिन् कर्मणि तत्तथा वल्गु सुन्दरञ्च यथा तथा विवल्गतो: उत्प्लवमानयो: तयो: हरपार्थयो: चरण-पातै: पादक्षेपै: निपातितानि रोधांसि यासां ता: सरितो नद्य: परित:स्थलो: परित:स्थलीषु प्रससृपु: प्रसृता:। "अभित: परित:" इत्यादिना द्वितीया। "जानपद" इत्यादिना अकृत्रिमार्थे ङीष्। कूलपातक्षोभात् उद्वेलसलिला: सरित: स्थलानि प्रामज्जयन् इत्यर्थ:। एतेन तयोर्भार उक्त: ॥ ११ ॥

वियतीति। वियति अन्तरिक्षे वेगेन परिप्लुतम् उत्पतितं तिसृणां पुरां जयिनं त्रिपुरान्तकम्। "जिदृक्षि" इत्यादिना इनिप्रत्यय:। कपिध्वजोऽर्जुनश्चरणाभ्यां पादाभ्याम् आनमित-क्षिति: सन् रयेण वेगेन समभिसृत्य अतिद्रुत्य अन्तरा मध्य-मार्गे चरणयो: पदयो: निजगृहे निगृहीतवानित्यर्थ:। उत्पतितस्य भगवतश्चरणौ स्वकराभ्यां जग्राह इत्यर्थ: ॥ १२ ॥

विस्मित इति। तेन कर्मणा चरणग्रहणकर्मणा सपदि

क्षेमुकाममवनौ तमक्रमं
निष्पिपेष परिरभ्य वक्षसा ॥ १३ ॥

तपसा तथा न मुदमस्य ययौ
भगवान् यथा विपुलसत्त्वतया।
गुणसंहतेः समतिरिक्तमहो
निजमेव सत्त्वमुपकारि सताम् ॥ १४ ॥

अथ हिमशुचिभस्मभूषितं
शिरसि विराजितमिन्दुलेखया।
स्ववपुरतिमनोहरं हरं
दधतमुदीक्ष्य ननाम पाण्डवः ॥ १५ ॥

विस्मितः सविस्मयः कर्मणां क्षयकरः मोक्षप्रद इत्यर्थः। परः पुमान् हरः अवनौ क्षितौ क्षेमुं कामो यस्य तम्। "तुङ्काममनसोरपि" इति मकारलोपः। अक्रमम् अक्लान्तं तं पार्थं वक्षसा परिरभ्य निष्पिपेष गाढमालिलिङ्ग इत्यर्थः। रथोद्धता वृत्तम् ॥ १३ ॥

तपसेति। भगवान् देवः अस्य अर्जुनस्य विपुलसत्त्वतया बहुसत्त्वसम्पदेत्यर्थः। धैर्य्यसम्पत्त्येति यावत् यथा मुदं ययौ तथा तपसा मुदं न ययौ। तथाहि सतां गुणसंहतेः तपःसेवादिगुणसङ्घातात् समतिरिक्तम् अतिशयितं निजं सत्त्वमेव उपकारि उपकारकमहो। प्रमिताक्षरावृत्तम् ॥ १४ ॥

अथेति। अथ हिमशुचिना हिमशुभ्रेण भस्मना भूषितं शिरसि इन्दुलेखया विराजितं शोभितम् अतिमनोहरं सुन्दरं

सहशरधि निजं तथा कार्मुकं
वपुरतनु तथैव संवर्मितम्।
निहितमपि तथैव पश्यन्नसिं
वृषभगतिरुपाययौ विस्मयम्॥ १६॥
सिषिचुरवनिमम्बुवाहा: शनै:
सुरकुसुममियाय चित्रं दिव:।
विमलरुचि भृशं नभो दुन्दुभे:
ध्वनिरखिलमनाहतस्यानशे॥ १७॥

स्ववपु: दधतम्। किरातरूपं विहाय निजविग्रहं दधानं हरम् उदीक्ष्य पाण्डवो ननाम प्रणतवान्। अपरवक्त्रं वृत्तम्। "अयुजि ननरला गुरु: समे तदपरवक्त्रमिदं नजौ जरौ" इति लक्षणात्॥ १५॥

सहेति। वृषस्य इव गति: यस्य सोऽर्जुन: तस्मिन् समये सह शरधिभ्यां वर्त्तत इति सहशरधि सनिषङ्गम्। "वोपसर्जनस्य" इति विकल्पात् सहशब्दस्य न सभाव:। निजं कार्मुकं गाण्डीवं तथैव पूर्ववत् एव संवर्मितं सम्यक् कवचितम् अतनु महत् निजं वपु: तथैव निहितं यथापूर्वं स्थापितम्। असिमपि खड्गञ्च तथैव पश्यन् विस्मयम् उपाययौ। क्वचित्तु "वृषभगतिम्" इति पाठ:। तत्र वृषभगतिं शिवञ्च पश्यन् विस्मयम् उपाययौ इत्यर्थ:। प्रमुदितवदना वृत्तम्। "प्रमुदितवदना भवेत् नौ रसौ" इति लक्षणात्॥ १६॥

सिषिचुरिति। अम्बुवाहा: शनै: अवनिं सिषिचु: उक्षाञ्चक्रु: दिवोऽन्तरिक्षात् चित्रं विचित्रं सुरकुसुमं मन्दारकुसु-

आसेदुषां गोत्रभिदोऽनुवृत्त्या
गोपायकानां भुवनत्रयस्य ।
रोचिष्णुरत्नावलिभिर्विमानैः
द्यौराचिता तारकितेव रेजे ॥ १८ ॥

हंसा बृहन्तः सुरसद्मवाहाः
संह्रादिकण्ठाभरणाः पतन्तः ।
चक्रुः प्रयत्नेन विकीर्यमाणैः
व्योम्नः परिष्वङ्गमिवाग्रपक्षैः ॥ १९ ॥

मानि । जातौ एकवचनम् । इयाय जगाम अनाहतस्य अताडितस्य दुन्दुभेः । जातौ एकवचनम् । ध्वनिः शब्दो विमलरुचि प्रसन्नम् अखिलं नभो भूयम् आनशे व्याप । अताडिता एव दुन्दुभयो: नेदु: इत्यर्थः । सर्वमिदम् अस्य सर्वलोकहितार्थत्वात् इति वेदितव्यम् ॥ १७ ॥

आसेदुषामिति । गोत्रभिदः इन्द्रस्य अनुवृत्त्या अनुस्मरणेन आसेदुषाम् आसन्नानां भुवनत्रयस्य गोपायकानां रक्षकाणां लोकपालादीनाम् । "गुपूधूप" इत्यादिना आयप्रत्ययः तदन्तात् ण्वुल् । रोचिष्णवः प्रकाशनशीलाः रत्नावलयो येषां तैः । "अलङ्कृञ्" इत्यादिना इष्णुच्प्रत्ययः । विमानैः पुष्पकै आचिता व्याप्ता द्यौः तारकिता सञ्जाततारकेव रेजे । उत प्रेक्षालङ्कारः ॥१८ ॥

हंसा इति । बृहन्तः महान्तः सुरसद्मानि विमानानि वहन्तीति सुरसद्मवाहाः । कर्मण्यण् । संह्रादीनि निह्रादीनि मधुराणि कण्ठाभरणानि किङ्किण्यो येषां ते पतन्तो धावन्तो

मुदितमधुलिहो वितानीकृताः
स्रज उपरि वितत्य सान्तानिकीः ।
जलद इव निषेदिवांसं वृषे
मरुदुपसुखयाम्बभूवेश्वरम् ॥ २० ॥
कृतधृति परिवन्दितेनोच्चकै-
र्गणपतिभिरभिन्नरोमोद्गमैः ।
तपसि कृतफले फलज्यायसी
स्तुतिरिति जगदे हरेः सूनुना ॥ २१ ॥

स्रंभाः प्रयत्नेन विकीर्य्यमाणैः विक्षिप्यमाणैः अग्रपक्षैः पक्षाग्रैः व्योम्नः परिष्वङ्गम् आलिङ्गनं चक्रुः इवेत्युत्प्रेक्षा ॥१८॥

मुदितेति । अथ मरुत् वायुः जलदे मेघे इव वृषे निषेदिवांसम् उपविष्टम् ईश्वरं मुदिता मधुलिहो भृङ्गा याभिः ताः वितानीकृताः उल्लोचाकाराः कृताः । "अस्त्री वितानमुल्लोचः" इत्यमरः । सान्तानिकीः सन्तानकुसुमविकाराः स्रजो मन्दारमाला इत्यर्थः । सन्तानशब्दाद्विकारार्थे ठक् । "सन्तानः कल्पवृक्षश्च" इत्यमरः । उपरि वितत्य विस्तार्य्य उपसुखयाम्बभूव प्रह्लादयामास ॥२०॥

कृतेति । अभिन्नरोमोद्गमैः अविरलरोमाञ्चैः गणपतिभिः प्रमथमुख्यैः उच्चकैः परिवन्दितेन साधु साधु इति संस्तुतेन । "वदि अभिवादनस्तुत्योः" कर्मणि क्तः । हरेः सूनुना अर्ज्जुनेन तपसि कृतं फलं भगवत्साक्षात्कारलक्षणं येन तस्मिन् कृतफले सति इत्यर्थः । कृतधृति कृतसन्तोषं यथा तथा फलज्यायसी फलाधिका इति वक्ष्यमाणा स्तुतिः जगदे कथिता ॥२१॥

शरणं भवन्तमतिकारुणिकं
भव भक्तिगम्यमधिगम्य: जना: ।
जितमृत्यवोऽजित ! भवन्ति भये
ससुरासुरस्य जगत: शरणम् ॥ २२ ॥
विपदेति तावदवसादकरी
न च कामसम्पदभिकामयते ।
न नमन्ति चैकपुरुषं पुरुषा:
तव यावदीश ! न नति: क्रियते ॥ २३ ॥
संसेवन्ते दानशीला विमुक्त्यै

शरणमिति। हे अजित! हे अपराजित! हे भव! अतिकारुणिकम् अतिदयालुम् ।"तदस्य प्रयोजनम्"इति ठक्। भक्तिगम्यं भक्तिमात्रसुलभं भवन्तं शरणं रक्षकम् अधिगम्य जितमृत्यवो जना:, न च तत् चित्रं किन्तु ससुरासुरस्य जगत: भये आपदि शरणं स्वयं रक्षितारो भवन्ति। "शरणं गृह-रक्षित्रो:" इति विश्व:। प्रमिताक्षरावृत्तम् ॥२२॥

विपदिति। हे ईश! यावत् तव नति: प्रणामो न क्रियते पुरुषेणेति शेष:। तावदेव एकं पुरुषम् एकाकिनं सन्तम् अवसादकरी क्षयकरी विपत् एति प्राप्नोति। कामसम्पत् मनोरथसम्पच्च न अभिकामयते न इच्छति। पुरुषाश्च अन्ये लोका: तम् एकं पुरुषं तव स्तुतिम् अकुर्वाणं न नमन्ति न वशे वर्त्तन्ते न अनिष्टनिवृत्ति: न अपि इष्टप्राप्ति: इत्यर्थ:। यदा तु त्वां प्रणमन्ति तदा एव सर्वं लभ्यते इति भाव: ॥२३॥

संसेवन्त इति। दानं शीलं स्वभावो निजधर्मो येषां ते

सम्पश्यन्तो जन्मदुःखं पुमांसः।
यन्निःसङ्गस्त्वं फलस्यानतेभ्यः
तत्कारुण्यं केवलं न स्वकार्य्यम् ॥ २४ ॥
प्राप्यते यदिह दूरमगत्वा
यत्फलत्यमरलोकगताय।
तीर्थमस्ति न भवार्णववाह्यं
सार्वकामिकमृते भवतस्तत् ॥ २५ ॥

दानशीलाः त्वाम् एव उद्दिश्य दानं कुर्वन्ति इत्यर्थः। तस्माद्दानं परमं वदन्तीति श्रुतेः इति भावः। कुतः? यतो जन्मदुःखं सम्पश्यन्तः अनुभवन्तः पुमांसो विमुक्त्यै मोक्षाय संसेवन्ते भवन्तम् इति शेषः। आनतेभ्यः प्रणम्रेभ्यः निःसङ्गो निष्पृहः त्वं यत् फलसि फलं ददासि तेषां फलार्थित्वात् इति भावः। तत् केवलं निरुपाधिकं कारुण्यं करुणा। स्वार्थे ष्यञ्। "कारुण्यं करुणा घृणा" इत्यमरः। न स्वकार्य्यम् एतदेव चित्रं केवलं परार्थत्वात् इति भावः। शालिनीवृत्तम् ॥२४॥

प्राप्यत इति। यत् तीर्थम् इह अस्मिन् लोके दूरम् अगत्वा प्राप्यते स्मृतिमात्रसुलभम् इत्यर्थः। गङ्गादिकन्तु न तथा इति भावः। यत् तीर्थम् अमरलोकगताय फलति फलं प्रयच्छति। अत्रापि स्मरणमात्रात् एव इति भावः। भवः संसारः स एव अर्णवः ततो वाह्यं वहिर्भवं संसारातीतं मोक्षप्रदम् इत्यर्थः। "वहिर्देवपञ्चजनेभ्यश्चेति वक्तव्यम्" इति ञ्यप्रत्ययः। सर्वे कामाः प्रयोजनम् अस्य इति सार्वकामिकम्। "तदस्य प्रयोजनम्" इति ठक्। तत् तादृक् तरन्ति अनेन इति तीर्थं तारकं

व्रजति शुचि पदं त्वयि प्रीतिमान्
प्रतिहतमतिरेति घोरां गतिम् ।
इयमनघ ! निमित्तशक्तिः परा
तव वरद ! न चित्तभेदः क्वचित् ॥२६॥

दक्षिणां प्रणतदक्षिण ! मूर्त्तिं
तत्त्वतः शिवकरीमविदित्वा ।
रागिणाऽपि विहिता तव भक्त्या
संस्मृतिर्भव ! भवत्यभवाय ॥ २७ ॥

भवतः त्वद्दते । "अन्यारात्" इत्यादिना पञ्चमी । अन्यत् अस्ति । औपच्छन्दसिकं वृत्तम् ॥२५॥

व्रजतीति । हे वरद ! त्वयि प्रीतिमान् नरः शुचि निर्मलं पदं कैवल्यं मुक्तिं व्रजति ।"मुक्तिः कैवल्यनिर्वाण" इत्यमरः । प्रतिहतमतिः उपहतबुद्धिः त्वद्द्वेषीत्यर्थः । घोरां गतिं तीव्रं नरकम् एति प्राप्नोति। न च एतावता तव रागद्वेषकलङ्कपङ्कम् इत्याह । इयमिति । हे अनघ ! निष्कलङ्क ! इयं भक्ताभक्तयोः इति शेषः । विधेयप्राधान्यात् स्त्रीलिङ्गता । परा दुस्तरा निमित्तशक्तिः निमित्तभूता शक्तिः स्वचेष्टितमहिमा तव क्वचिद् भक्ते द्वेषिणि वा कुत्रापि चित्तभेदो बुद्धिवैषम्यं नास्ति स्वकर्मणैव जन्तुस्तरति पतति वा त्वं साक्षितया सर्वत्र सम इत्यर्थः ॥२६॥

दक्षिणामिति । हे भव ! हे प्रणतदक्षिण ! प्रणतेषु दाक्षिण्यसम्पन्न ! दाक्षिण्यं परच्छन्दानुवर्त्तित्वम् । "दक्षिणः सरलावामपरच्छन्दानुवर्त्तिषु" इति विश्वः । शिवकरीं श्रेयस्करीम् । "कृञो हेतु" इत्यादिना टप्रत्यये ङीप् । तव दक्षिण

दृष्ट्वा दृश्यान्याचरणीयानि विधाय
प्रेक्षाकारी याति पदं मुक्तमपायैः।
सम्यग्दृष्टिस्तस्य परं पश्यति यस्त्वां
यश्चोपास्ते साधु विधेयं स विधत्ते ॥ २८ ॥

युक्ताः स्वशक्त्या मुनयः प्रजानां
हितोपदेशैरुपकारवन्तः।
समुच्छिनत्सि त्वमचिन्त्यधामा
कर्माण्युपेतस्य दुरुत्तराणि ॥ २९ ॥

ं तत्त्वतो याथार्थ्येन अविदित्वापि रागिणा रागद्वेषवतापि
ा विहिता तव संस्मृतिः संस्मरणम् अभवाय संसार
त्तये। प्रसज्यप्रतिषेधेऽपि नञ्समास इष्यते। भवति
ज्ञानं विना अपि भक्तिपूर्विका तव संस्मृतिः एव मुक्ति-
ानम् इत्यर्थः। स्वागतावृत्तम् ॥ २७ ॥

दृष्ट्वेति। प्रेक्षया बुद्ध्या करोतीति प्रेक्षाकारी विमृश्यकारी
ानि द्रष्टव्यानि दृष्ट्वा ज्ञात्वा आचरणीयानि विधाय कर्त्त-
ानि च कृत्वा अपायैः मुक्तं पदं याति। "अविद्यया मृत्युं
र्त्वा विद्यया मृतमश्नुते" इति श्रुतेः। ज्ञानकर्मभ्यां मुक्तिः
र्थः। किन्तु ते अपि ज्ञानकर्मणी त्वद्विषये एव मुक्तिसाधनं
अन्यविषये इत्याशयेन आह। सम्यगिति। यः परं त्वां
श्यति तस्य सम्यग्दृष्टिः सम्यक् ज्ञानम्। यश्च त्वाम् उपास्ते
वते स एव साधु विधेयं विधत्ते साधुकारीत्यर्थः। मत्तमयूरं
त्तम्। लक्षणन्तु उक्तम् ॥ २८ ॥

युक्ता इति। मुनयो व्यासादयः स्वशक्त्या निजयोगमहिम्ना

सन्निबद्धमपहर्तुमहार्य्यं
भूरि दुर्गतिभयं भुवनानाम् ।
अद्भुताकृतिमिमामतिमायः
त्वं बिभर्षि करुणामय ! मायाम् ॥ ३० ॥
न रागि चेतः परमा विलासिता
वधूः शरीरेऽस्ति न चास्ति मन्मथः ।

युक्ताः तथा हितोपदेशैः विधिनिषेधवाक्यैः स्मृतीतिहासपुराण मुखेन प्रजानाम् उपकारवन्तः कृतोपकाराय । मोक्षप्रदस्तु तेषाम् अन्येषां च त्वमेव इत्याह । समिति । अचिन्त्यधामा अचिन्त्यमहिमा त्वमेव उपेतस्य शरणं प्राप्तस्य प्रपन्नस्य मस्व-न्धीनि दुरुत्तराणि सुदुस्तराणि कर्माणि बन्धकानि पुण्य पापानि समुच्छिनत्सि नाशयसि ते तु अत्र असमर्था एव इति भावः ॥२८॥

सन्निबद्धमिति । अतिक्रान्तो मायां बन्धरूपाम् अतिमायः "अत्यादयः क्रान्ताद्यर्थे द्वितीयया" इति समासः । हे करुणा-मय ! हे कृपालो ! सन्निबद्धं स्वकर्मणा दृढबद्धम् अत एव अहार्य्यम् अन्यैः अनुच्छेद्यं भूरि प्रभूतं भुवनानां दुर्गतिभयं नरकभयम् । "स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम्" इत्यमरः । अपहर्तुम् अद्भुताकृतिं विचित्ररूपाम् इमां मायां दृश्यमानां लीलाविग्रहरूपां बिभर्षि । अन्येषां कर्मानुबन्धी विग्रहपरिग्रहः । भवतस्तु परोपकारार्थं इत्यर्थः ॥३०॥

न रागीति । हे देव ! चेतस्तव चित्तं रागि रागयुक्तं न परमयोगित्वादिति भावः । तथापि परमा निरतिशया विला-

नमस्क्रिया चोषसि धातुरित्यहो
निसर्गदुर्बोधमिदं तवेहितम् ॥ ३१ ॥
तवोत्तरीयं करिचर्म साङ्गजं
ज्वलन्मणिः सारशनं महानहिः ।
स्रगास्यपङ्क्तिः शवभस्म चन्दनं
कला हिमांशोश्च समं चकासति ॥ ३२ ॥

मिता शृङ्गारादिचेष्टाशीलता भिक्षाटनादिषु विहरणेन तीर्थ्यविकव्यसनितया च इति भावः। किञ्च शरीरे अर्द्धाङ्गे वधूप्रसिद्धञ्च एतदिति भावः। तथापि मन्मथः कामश्च नास्ति तस्य भस्मीकरणादिति भावः। किञ्च प्रातः उषसि सन्ध्यायां धातुः ब्रह्मणो नमस्क्रिया वन्दनं स्वयं जगद्वन्द्यस्य अपीत्यर्थः। इतीत्थं विरुद्धम् इदम् उक्तम् ईहितं चेष्टितं निसर्गतो दुर्बोधं दुराकलनीयं दुर्ग्रहम् इत्यर्थः। अदृष्टपूर्वत्वात् इति भावः। वंशस्थं वृत्तम् ॥३१॥

तवेति। हे देव ! तव साङ्गजं सलोमकं करिचर्म उत्तरीयं संव्यानम्। "संव्यानमुत्तरीयञ्च" इत्यमरः। दुःस्पर्शम इति भावः। ज्वलन्मणिः ज्वलद्रत्नो महान् अहिः सारशन कटिभूषाविशेषः। योऽन्येषां प्राणहर इत्यर्थः। "क्लीवे सारशनं चाथ पुंस्कट्यां शृङ्खलं त्रिषु" इत्यमरः। आस्यपङ्क्तिः कपालमाला। स्रक् माल्यं शवभस्म चन्दनम् उभयत्र अपि अस्पृश्यम् अमङ्गलं च इति भावः। किञ्च एतानि वस्तूनि हिमांशोः कला च समं तुल्यतया चकासति दीप्यन्ते त्वदाश्रयवशात् अरम्यस्य अपि रम्यतेति किमशक्यं तवेति भावः ॥३२॥

अविग्रहस्याप्यतुलेन हेतुना
समेत्य भिन्नद्वयमूर्त्ति तिष्ठतः ।
तवैव नान्यस्य जगत्सु दृश्यते
विरुद्धवेशाभरणस्य कान्तता ॥ ३३ ॥

आत्मलाभपरिणामनिरोधैः
भूतसङ्घ इव न त्वमुपेतः ।
तेन सर्वभुवनातिग ! लोके
नोपमानमसि नाप्युपमेयः ॥ ३४ ॥

अविग्रहस्येति । अविग्रहस्य वस्तुतोऽशरीरस्य अपि सतः अतुलेन दुर्बोधत्वात् असदृशेन हेतुना केनापि कारणेन इत्यर्थः। भिन्ना सङ्गता विलक्षणा च द्वयी द्विविधा स्त्रीपुंसात्मिका मूर्त्तिः यस्मिन् कर्मणि तत् समेत्य भिन्नद्वयमूर्त्ति यथा तथा तिष्ठतोऽशरीरस्य शरीरमेव विरुद्धं तदपि नारीनरात्मकमिति किमतश्चित्रम् अस्तीति भावः। एवंविधस्य तवैव जगत्सु विरुद्धे वेषाभरणे पूर्वोक्ते यस्य तस्य विरुद्धवेषाभरणस्य अपि सतः कान्तता रमणीयता दृश्यते अन्यस्य न दृश्यते तस्मात् अचिन्त्योऽसौ तव महिमा इति भावः ॥३३॥

आत्मेति । हे देव ! त्वं भूतसङ्घ इव शरीरादिसङ्घात इव आत्मलाभपरिणामनिरोधैः जन्मजरामरणैः उपेतो युक्तो न असि । तेन कारणेन हे सर्वभुवनातिग ! सर्वलोकोत्तर ! उपमीयतेऽनेनेति उपमानं नासि। उपमीयते यत् तत् उपमेयमपि नासि न कश्चित् त्वादृशोऽस्ति त्वमपि न अन्यसदृशः अनन्यसाधारणत्वात् इत्यर्थः। वृत्तमुक्तम् ॥३४॥

त्वमन्तकः स्थावरजङ्गमानां
त्वया जगत्प्राणिति देव ! विश्वम् ।
त्वं योगिनां हेतुफले रुणत्सि
त्वं कारणं कारणकारणानाम् ॥ ३५ ॥

रक्षोभिः सुरमनुजैर्दितेः सुतैर्वा
यल्लोकेष्वविकलमाप्तमाधिपत्यम् ।
पाविन्याः शरणागतार्त्तिहारिणि ते
माहात्म्यं भव ! भवते नमस्क्रियायाः ॥ ३६ ॥

त्वमिति । हे देव ! त्वं स्थावरजङ्गमानाम् अन्तकः संहर्त्ता । त्वया हेतुना विश्वं सर्वं जगत् प्राणिति जीवति । त्वं योगिनां हेतुः प्रवर्त्तकं कर्म फलं भोगश्च ते हेतुफले रुणत्सि निवर्त्तयसि । तेषां त्वमेव बन्धविमोचक इत्यर्थः । किञ्च त्वं कारणानि भूतानि तेषां कारणानि भूतसूक्ष्माणि परमाणवो वा तेषां कारणकारणानां कारणं प्रकृत्यादिद्वारा उत्पत्तिस्थानम् । अत्र सर्वत्र "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति" इति श्रुतिः प्रमाणमिति भावः ॥ ३५ ॥

रक्षोभिरिति । रक्षोभिः राक्षसैः सुराश्च मनुजाश्च तैः दितेः सुतैः दैत्यैः वा लोकेषु यत् अविकलं सम्पूर्णम् आधिपत्यम् आप्तं प्राप्तं तत् हे भव ! शरणागतानाम् आर्त्तिहारिणि ते भवते तुभ्यं नमस्क्रियायाः । "नमः स्वस्ति" इत्यादिना चतुर्थी । पाविन्याः पापहारिण्याः माहात्म्यं सामर्थ्यं न कस्य उन्नतिर्भवति शिरसः त्वयि अवनतिरिति भावः । प्रहर्षिणीवृत्तम् ॥ ३६ ॥

तरसा भुवनानि यो बिभर्त्ति
ध्वनति ब्रह्म यतः परं पवित्रम्।
परितो दुरितानि यः पुनीते
शिव! तस्मै पवनात्मने नमस्ते॥ ३७॥

भवतः स्मरतां सदासने
जयिनि ब्रह्ममये निषेदुषाम्।
दहते भवबीजसन्ततिं
शिखिनेऽनेकशिखाय ते नमः॥ ३८॥

अथ अष्टमूर्त्तिषु काश्चित् स्तुवन् वायुमूर्त्तिं तावदाह। तरसेति। यः पवनः तरसा बलेन। "तरसी बलरंहसी" इति विश्वः। भुवनानि बिभर्त्ति प्राणात्मना धारयति। यतो यत् प्रेरणात पवित्रं परं परमं ब्रह्म वर्णात्मकं ध्वनति नदति। "सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः। वर्णान् संजनयति" इति वचनात्। यः पवनः परितो दुरितानि पातकानि पुनीते शोधयति नाशयतीति यावत्। हे शिव! तस्मै पावयतीति पवनो वायुः स एव आत्मा यस्य तस्मै पवनात्मने ते तुभ्यं नमः। वृत्तमुक्तम्॥३७॥

अथ अग्निमूर्त्तिं स्तौति। भवत इति। जयिनि विजयशीले सर्वोत्कृष्टे ब्रह्ममये ब्रह्मप्रधाने सदासने सम्यगासने योगासने इत्यर्थः। निषेदुषाम् उपविष्टानाम् भवतः स्मरतां भवन्तं ध्यायताम्। "अधीगर्थ" इत्यादिना शेषे कर्मणि षष्ठी। भवबीजसन्ततिं संसारनिदानसमूहं भवनिदानकर्मसङ्घात

आबाधामरणभयार्चिषा चिराय
प्लुष्टेभ्यो भव ! महता भवानलेन।
निर्वाणं समुपगमेन यच्छते ते
बीजानां प्रभव ! नमोऽस्तु जीवनाय ॥ ३९ ॥
यः सर्वेषामावरीता वरीयान्
सर्वैर्भावैर्नावृतोऽनादिनिष्ठः।
मार्गातीतायेन्द्रियाणां नमस्ते-
ऽविज्ञेयाय व्योमरूपाय तस्मै ॥ ४० ॥

दहते भस्मीकुर्वते अनेकशिखाय बहुज्वालाय शिखिने वह्निमूर्त्तये ते तुभ्यं नमः ॥३८॥

अथ जलमूर्त्तिं स्तौति। आबाधेति। हे भव ! बीजानां प्रभव ! कारणभूत ! "जीवानाम्" इति पाठे तेषां तत्प्रतिबिम्बत्वादिति भावः। आबाधा आध्यात्मिकादिदुःखं मरणञ्च ते ताभ्यां भयं तदेव अर्चिः तस्य तेन महता भवानलेन संसाराग्निना चिराय चिरं प्लुष्टेभ्यो दग्धेभ्यः समुपगमेन संसेवया निर्वाणं सन्तापशान्तिं यच्छते ददते जीवयतीति जीवन तस्मै जीवनाय जलात्मने ते तुभ्यं नमः ॥३९॥

इदानीं नभोमूर्त्तिं स्तौति। य इति। भवेत्यनुवर्त्तते। भवति अस्मादयं प्रपञ्च इति भवः तत्सम्बुद्धौ। सकलजगज्जनकेति यावत्। वरीयान् उरुतरो विभुः इत्यर्थः। "प्रियस्थिर" इत्यादिना उरुशब्दस्य वरादेशः। यः त्वं सर्वेषां वस्तूनाम् आवरीता आच्छादयिता। वृणोतेस्तृच्प्रत्ययः। सर्वैः भावैः पदार्थैः न आवृतः केनापि कदाचिदपि अनावृतः स्वयं व्यापकत्वादिति

अणीयसे विश्वविधारिणे नमो
नमोऽन्तिकस्थाय नमो दवीयसे ।
अतीत्य वाचां मनसां च गोचरं
स्थिताय ते तत्पतये नमो नमः ॥ ४१ ॥
असंविदानस्य ममेश संविदां
तितिक्षितुं दुश्चरितं त्वमर्हसि ।
विराध्य मोहात् पुनरभ्युपेयुषां
गतिर्भवानेव दुरात्मनामपि ॥ ४२ ॥

भावः । अविद्यमाने आदिनिष्ठे उत्पत्तिनाशौ यस्य असौ अनादिनिष्ठः नित्यः । "निष्ठा निष्पत्तिनाशान्ताः" इत्यमरः । इन्द्रियाणां चक्षुरादीनां मार्गातीताय अतीन्द्रियाय । अत एव अविज्ञेयाय अपरिच्छेद्याय तस्मै व्योमरूपाय ते तुभ्यं नमः ॥४०।

अणीयस इति । भवत्यनुवर्त्तते हे भव ! अणीयसे सूक्ष्मतराय तथापि विश्वविधारिणे जगद्धारकाय ते तुभ्यं नमः । अन्तिकस्थाय अन्तर्यामितया सन्निकृष्टाय सते । तथापि दवीयसे दूरतराय दुर्ज्ञेयाय ते तुभ्यं नमः । वाचां मनसाञ्च गोचरं विषयम् अतीत्य स्थिताय अवाङ्मनसगोचराय । तत्पतये तेषां वाङ्मनसानाम् अध्यक्षाय । तदध्यक्षः तैः एव न दृश्यते इति विरोधः । ते तुभ्यं नमो नमः ।"चापले द्वे भवत इति वक्तव्यम्" इति द्विरुक्तिः । "सम्भ्रमेण प्रवृत्तिश्चापलम्" इति काशिका । भक्त्य द्रेकाच्च सम्भ्रमः । विरोधाभासोऽलङ्कारः ॥४१॥

असंविदानस्येति । संविदां ज्ञानानाम् ईश । "ईशानः सर्वविद्यानाम्" इति श्रुतेरिति भावः । "प्रेक्षोपलब्धिश्चित्

आस्तिक्यशुद्धमवतः प्रियधर्म ! धर्मं
धर्मात्मजस्य विहितागसि शत्रुवर्गे ।
सम्प्राप्नुयां विजयमीश ! यया समृद्ध्या
तां भूतनाथ ! विभुतां वितराहवेषु ॥४३॥
इति निगदितवन्तं सूनुमुच्चैर्मघोनः
प्रणतशिरसमीशः सादरं सान्त्वयित्वा ।

संवित्" इत्यमरः। असंविदानस्य अज्ञानस्य। "समो गम्यृच्छि" इत्यादिना विदेः सम्पूर्वादकर्मकात् शानच्प्रत्ययः। मम दुश्चरितं शास्त्रप्रयोगरूपं दुश्चेष्टितं तितिक्षितुं सोढ़ुम्। तिजेः सन्नन्तात् तुमुन्प्रत्ययः। त्वमर्हसि योग्योऽसि। ननु तव महानपराधः कथं सोढ़व्यः ? तत्राह। विरोध्येति। मोहात् अज्ञानात् विरोध्य वैरमुत्पाद्य पुनरभ्युपेयुषां पश्चात् शरणागतानां दुरात्मनामपि भवानेव गतिः त्वं हि शरणागतानाम् अपराधं न गणयसि इत्यर्थः॥ ४२ ॥

सम्प्रति वरं याचते। आस्तिक्येति। हे प्रियः धर्मः यस्य इति प्रियधर्म ! "समासान्तो विधिरनित्यः" इति न समासान्तः अच्प्रत्ययः। परलोके मतिः अस्तीति आस्तिकः पारलौकिकः। "अस्तिनास्ति दिष्टम्" इति ठक्। तस्य भावः आस्तिक्यं विश्वासः तेन शुद्धं विमलं धर्मं वैदिकाचारमवतः पालयतो धर्मात्मजस्य युधिष्ठिरस्य विहितागसि कृतापकारे शत्रुवर्गविषये हे ईश ! यया समृद्ध्या अस्त्रशस्त्रवैभवेन विजयं सम्प्राप्नुयां भजेयं हे भूतनाथ ! आहवेषु तां विभुतां विभूतिं शस्त्रविद्यां वितर देहि ॥ ४३ ॥

ज्वलदनलपरीतं रौद्रमस्त्रं दधानं
धनुरुपपदमस्मै वेदमभ्यादिदेश ॥ ४४ ॥
स पिङ्गाक्षः श्रीमान् भुवनमहनीयेन महसा
तनुं भीमां बिभ्रत् त्रिगुणपरिवारप्रहरणः ।
परीत्येशानं त्रिः स्तुतिभिरुपगीतः सुरगणैः
सुतं पाण्डोर्वीरं जलदमिव भास्वानभिययौ॥४५॥

इतीति । इति उच्चैः निगदितवन्तं प्रणतशिरसं मघोनः इन्द्रस्य सूनुम् अर्जुनम् ईशो महादेवः सादरं यथा तथा सान्त्वयित्वा उपसान्त्व्य अस्मै अर्जुनाय ज्वलता अनलेन तेजसा दीप्त्या परीतं व्याप्तं रौद्रं रुद्रदेवताकं पाशुपतमस्त्रं दधानं धनुरुपपदं धनुःशब्दोपपदं वेदं धनुर्वेदम् इत्यर्थः । अभ्यादिदेश अध्यापयामासेत्यर्थः । "धनुरुपपदं वेदम्" इत्यत्र धनुरुपपदत्वं वेदशब्दस्य न तु संज्ञिनः तदर्थस्य इति संज्ञायाः संज्ञिगतत्वाभावात् अवाच्यवचनदोषमाहुरालङ्कारिकाः । तदुक्तम् "यदवाच्यवचनमवाच्यवचनं हि तत्" इति । समाधाने तु धनुःशब्दविशेषितेन वेदशब्देन शब्दपरेण इत्यर्थः परोपदेशयोग्यो धनुर्वेदो लक्ष्यः ॥ ४४ ॥

स इति । पिङ्गाक्षः पिङ्गलाक्षः श्रीमान् शोभावान् भुवनमहनीयेन लोकपूज्येन महसा तेजसा भीमां तनुं बिभ्रत् । त्रिगुणः त्रिशिखः परिवारः प्राकारो यस्य तत् त्रिगुणपरिवारं त्रिशूलं तदेव प्रहरणम् आयुधं यस्य स तथोक्तः । सूर्य्यपक्षे तु गुणत्रयपरिवारः त्रय्यात्मक इति योज्यम् । स धनुर्वेदः सुरगणैः स्तुतिभिः उपगीतः सन् ईशानं देवं त्रिः त्रिवारम् । "द्वित्रि-

अथ शशधरमौलेरभ्यनुज्ञामवाप्य
त्रिदशपतिपुरोगाः पूर्णकामाय तस्मै
अवितथफलमाशीर्वादमारोपयन्तो
विजयि विविधमस्त्रं लोकपाला वितेरुः ॥४६॥

असंहार्योत्साहं जयिनमुदयं प्राप्य तरसा
धुरं गुर्वीं वोढुं स्थितमनवमादाय जगतः ।
स्वधाम्ना लोकानां तमुपरि कृतस्थानममराः
तपोलक्ष्म्या दीप्तं दिनकृतमिवोच्चैरुपजगुः॥४७॥

चतुर्भ्यः सुच्" इति सुच्प्रत्ययः । परीत्य प्रदक्षिणीकृत्य वीरं पाण्डोः सुतम् अर्जुनं भास्वान् सूर्यः जलदमिव अभिययौ । शिखरिणीवृत्तम् ॥४५॥

अथेति । अथ शशधरमौलिवरप्रदानानन्तरं त्रिदशपतिपुरोगाः इन्द्रादयो लोकपालाः शशधरमौलेः शम्भोः अभ्यनुज्ञाम् अवाप्य पूर्णकामाय तस्मै पाण्डवाय अवितथफलम् अमोघफलम् आशीर्वादम् आरोपयन्तः प्रयुञ्जानाः विजयि जयशीलं विविधं नानाविधम् अस्त्रम् ऐन्द्रादिकं वितेरुः ददुः । मालिनीवृत्तम् ॥४६॥

असंहार्योत्साहमिति । तरसा बलेन वेगेन च जयिनं जयशीलम् उदयमस्त्रलाभरूपम् अभ्युदयम् अन्यत्र उदायाद्रिं च प्राप्य असंहार्योत्साहं संहर्त्तुम् अशक्योत्साहं जगतोऽनवमादाय क्षेमाय गुर्वीं धुरं दुष्टनिग्रहं तमोपसंहाररूपं च भारं वोढुं स्थितम्। स्वधाम्ना स्वतेजसा लोकानाम् उपरि कृतस्थानं कृतस्थितिं कृतपदम् अन्यत्रोपरि वर्त्तमानं तपोलक्ष्म्या

व्रज जहि रिपुलोकं पादपद्मानतः सन्
गदित इति शिवेन श्लाघितो देवसङ्घैः।
निजगृहमथ गत्वा सादरं पाण्डुपुत्रो
धृतगुरुजयलक्ष्मीर्धर्मसूनुं ननाम॥ ४८॥

इति श्रीमहामहोपाध्यायभारविकृतौ किरातार्जुनीये महाकाव्ये धनञ्जयास्त्रलाभो नाम अष्टादशः सर्गः।

…प्तं तं पाण्डवम् अमराः इन्द्रादयः। दिनकृतं सूर्यमिव उच्चैः उपजगुः साधु महाभाग्योऽसीति तुष्टुवुः। शिखरिणी वृत्तम्॥४७॥

व्रजेति। शिवेन व्रज स्वपुरं गच्छ अरिलोकं जयेति गदितः उक्तः यतः पादपद्मानतः शिवपादपङ्कजानतः सन्। तथा देवसङ्घैः श्लाघितः स्तुतः अत एव धृता गुर्वी जयलक्ष्मी येन स पाण्डुपुत्रः अर्जुनः निजगृहं स्वाश्रमं गत्वा प्राप्य अथ सादरं यथा तथा धर्मसूनुं राजानं ननाम नमनं चकार॥४८॥

इति श्रीपदवाक्यप्रमाणपारावारीणमहामहोपाध्यायकोलाचल मल्लिनाथसूरिविरचितायां किरातार्जुनीयव्याख्यायां घण्टापथसमाख्यायामर्जुनवरप्रदानो नाम अष्टादशः सर्गः।

---

॥ समाप्तम् ॥